चित्रक्षयोपशमतस्तथाविध आशयविशेष इति। एतच्च 'साधूनाश्रित्य' साधवो मुनयः, 'पर अवञ्चकत्रयं' स्वरूपतस्त्वेतद् 'इषुलक्ष्यक्रियोपम' शरस्य लक्ष्यक्रिया तत्प्रधानतया तदविसंवादिन्येव, अन्यथा लक्ष्यक्रियाद्ययोगात्। एवं साधूना-श्रित्य योगावञ्चकस्तद्योगाविसंवादी। एवं तद्वन्दनादिक्रिया तत्फलं चाश्रित्यैव एवमेव द्रष्टव्य इति॥ ॥३४॥ एतदपि यन्निमित्तं तदभिधातुमाह—

एतच्च सत्प्रणामादिनिमित्तं समये स्थितम्।
अस्य हेतुश्च परमस्तथाभावमलाल्पता ॥३५॥

एतच्चावञ्चकत्रयं, 'सत्प्रणामादिनिमित्तं'-साधुवन्दनादिनिमित्तमित्यर्थः। 'समये स्थितं'-सिद्धान्ते प्रतिष्ठितम्। 'अस्य'-सत्प्रणामादे हेतुश्च परम. क इत्याह 'तथाभावमलाल्पता' कर्मसम्बन्धयोग्यताल्पता रत्नादिमलापगमे ज्यो-त्स्नादिप्रवृत्तिवदिति योगाचार्याः ॥३५॥

प्रकृतवस्त्वपोद्वलनाय व्यतिरेकसारमाह—

नास्मिन् घने यतः सत्सु, तत्प्रतीतिर्महोदया।
किं सम्यग् रूपमादत्ते, कदाचिन्मन्दलोचनः ॥३६॥

'नास्मिन्'—भवमले 'घने—'प्रबले, यत. 'सत्सु'—साधुषु. 'तत्प्रतीति—' सत्प्रतीतिर्भवति। किंविशिष्टेत्याह 'महोदया—'अभ्युदयादिसाधकत्वेन। प्रतिवस्तूपमयाऽमुमेवार्थमाह 'किं सम्यग् रूपमादत्ते ?' लक्षणव्यञ्जनादि-कास्त्न्येन 'कदाचिन्मन्दलोचन' इन्द्रियदोषान्नादत्त एवेत्यर्थ ॥३६॥

अधुनान्वयसारमधिकृतवस्तुसमर्थनायैवाह—

अल्पव्याधिर्यथा लोके तद्विकारैर्न बाध्यते।
चेष्टते चेष्टसिद्ध्यर्थं, वृ(धृ)त्यैवायं तथा हिते ॥३७॥

'अल्पव्याधि.—'क्षीणप्रायरोग. यथा लोके कश्चित्तद्विकारै—कण्ड्वादिभिः 'न बाध्यते' व्याधेरल्पत्वेन न बाध्यते। किं चेत्याह 'चेष्टते च' राजसेवादौ. 'इष्टसिद्ध्यर्थं' कुटुम्बादिपालनाय, एष दृष्टान्तोऽयमर्थोपनय इत्याह, वृ(धृ) त्यैव धर्मयोनिरूपया एतच्च "वृत्ति (धृति.) श्रद्धा सुखा विविदिषा विज्ञप्ति-रिति धर्मयोनय" इति वचनात्। तदनया हेतुभूतया, 'अयं—'योगी तथाल्प-

व्याधिगुरुत्रवत्स्थूराऽकार्थवृत्तिनिरोधेन, 'हिते'-हितविषये दानादौ चेष्टत इति ॥३७॥ एतदनन्तरोदितमखिलमेव यदोपजायते तदभिधातुमाह—

यथाप्रवृत्तकरणे, चरमेऽल्पमलत्वतः ।
आसन्नग्रन्थिभेदस्य, समस्त जायते ह्यदः ॥३८॥

'यथाप्रवृत्तकरणे'-प्राग्व्यावर्णितस्वरूपे 'चरमे' पर्यन्तवर्तिनि अल्पमलत्वत. कारणात् 'आसन्नग्रन्थिभेदस्य' सतः, समस्तमनन्तरोदितं 'जायते ह्यद' एतदिति ॥३८॥ अथवा चरमं यथाप्रवृत्तमिदमपूर्वमेवेत्याह—

अपूर्वासन्नभावेन, व्यभिचारवियोगतः ।
तत्त्वतोऽपूर्वमेवेदमिति योगविदो विदु ॥३९॥

'अपूर्वासन्नभावेन' हेतुना तथा 'व्यभिचारवियोगत'-कारणात् 'तत्त्वतः-' परमार्थेन 'अपूर्वमेवेदं' चरमं यथाप्रवृत्तम्, इति योगविदो जानत इति भाव, ॥३९॥ इहैव गुणस्थानयोजनमाह—

प्रथम यद् गुणस्थान, सामान्येनोपवर्णितम् ।
अस्या तु तदवस्थाया, मुख्यमन्वर्थयोगतः ॥४०॥

प्रथममाद्य यद् गुणस्थानं मिथ्यादृष्ट्याख्य, सामान्येनोपवर्णितमागमे 'मिच्छद्दिट्ठी सासायणाइ'' इति वचनात् अस्यां तु तदवस्थायामित्यस्यामेव, मुख्य निरुपचरितम्। कुत इत्याह 'अन्वर्थयोगत-'एवंगुणभावेन गुणस्थानोपपत्तेरिति ॥उक्ता मित्रा ॥४०॥

अधुना तारोच्यते। तदत्राह—

तारायां तु मनाक्स्पष्टं, नियमश्च तथाविधः ।
अनुद्वेगो हितारम्भे, जिज्ञासा तत्त्वगोचरा ॥४१॥

'तारायां' पुनर्दृष्टौ किमित्याह 'मनाक्स्पष्टं' दर्शनमिति, अतः 'नियमश्च तथाविधः' शौचादिरिच्छादिरूप एव "शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमा." (यो. सू २-३२) इति वचनात्। तदत्र द्वितीययोगात्प्रतिपत्तिरपि मित्रायां त्वेवदभाव एव तथाविधक्षयोपशमाभावात्। तथानुद्वेगो हितारम्भे

पारलौकिकेऽखेदसहितः अत एव तत्सिद्धिः । तथा 'जिज्ञासा तत्त्वगोचरा' अद्वेषत एव तत्प्रतिपत्त्यानुगुण्यमिति ॥४१॥ अस्यां दृष्टौ यदन्यद्गुणजातं भवति तदाह—

भवत्यस्यां तथाऽच्छिन्ना, प्रीतिर्योगकथास्वलम् ।
शुद्धयोगेषु नियमाद्, बहुमानश्च योगिषु ॥४२॥

भवत्यस्यां दृष्टौ 'तथा–'तेन प्रकारेण 'अच्छिन्ना–'भावप्रतिबन्धसारतया प्रीतिर्योगकथास्वलमत्यर्थं तथा शुद्धयोगेष्वकलङ्कप्रधानेषु 'नियमाद्'-नियमेन बहुमानश्च योगिषु भवति ॥४२॥ न केवलमयम्, किं च —

यथाशक्त्युपचारश्च, योगवृद्धिफलप्रदः ।
योगिनां नियमादेव, तदनुग्रहधीयुतः ॥४३॥

'यथाशक्ति–' शक्त्यौचित्येन किमित्याह 'उपचारश्च–'ग्रासादिसम्पादनेन यथोक्तयोगिष्विति प्रक्रमः । स एव विशिष्यते 'योगवृद्धिफलप्रदः' तत्तस्यकुशलपरिणामेन, 'योगिनां नियमादेव' नान्यथा तद्विघातहेतुरिति, 'तदनुग्रहधीयुतः' उपचारसम्पादकानुग्रहधीयुत इत्यर्थः ॥४३॥ अयमेव विशिष्यते—

लाभान्तरफलश्चास्य, श्रद्धायुक्तो हितोदयः ।
क्षुद्रोपद्रवहानिश्च, शिष्टसम्मतता तथा ॥४४॥

लाभान्तरफलश्चास्योपचारकर्तुः, शुद्धोपचारपुण्यात्तथाविपाकभावात् । अत एव श्रद्धायुक्त उपचार इति प्रक्रमः । 'हितोदयः' पूर्ववत्, क्षुद्रोपद्रवहानिश्च' भवति, अत एव व्याध्यादिनाशः, शिष्टसम्मतता तथा, अत एवास्यातिसुन्दरो बहुमानः ॥४४॥ तथा—

भयं नातीव भवजं, कृत्यहानिर्न चोचिते ।
तथानाऽभोगतोऽप्युच्चैर्न चाप्यनुचितक्रिया ॥४५॥

'भयं नातीव भवजं' तथाऽशुभाऽप्रवृत्तेः, 'कृत्यहानिर्न चोचिते' सर्वस्मिन्नेव धर्मादरात्, तथानाभोगतोऽप्युच्चैरत्यर्थं, न चाप्यनुचितक्रिया सर्वत्रैव ॥४५॥ एवं—

कृत्येऽधिकेऽधिकगते, जिज्ञासा लालसान्विता ।
तुल्ये निजे तु विकले, सन्त्रासो द्वेषवर्जितः ॥४६॥

'कृत्ये' ध्यानादौ 'अधिके-' स्वभूमिकापेक्षया 'अधिकगत' आचार्यादिवर्तिनि 'जिज्ञासा'ऽस्य कथमेतदेवमिति 'लालसान्विता'-अभिलाषातिरेकयुक्ता। 'तुल्ये' कृत्ये वन्दनादौ, 'निजे' स्वात्मीय एव 'विकले-' कायोत्सर्गकरणादिना, 'सन्त्रासो' भवत्यात्मनि 'हा! विराधकोऽहमि' ति, 'द्वेषवर्जितो' ऽधिके ऽधिकृतदृष्टिसामर्थ्यादिति ॥४६॥

दुःखरूपो भवः सर्व उच्छेदोऽस्य कुतः कथम्।
चित्रा सतां प्रवृत्तिश्च, साऽशेषा ज्ञायते कथम् ॥४७॥

'दुःखरूपो भवः सर्वो' जन्मजरादिरूपत्वात् 'उच्छेदोऽस्य' भवस्य, 'कुतो' हेतोः क्षान्त्यादेः 'कथं' केन प्रकारेण। चित्रा 'सतां' मुनीनां, प्रवृत्तिश्चैत्यकर्मादिना प्रकारेण, साऽशेषा ज्ञायते कथं तदन्यापोहतः ॥४७॥ यतः—

नास्माकं महती प्रज्ञा, सुमहान् शास्त्रविस्तरः।
शिष्टाः प्रमाणमिह तदित्यस्यां मन्यते सदा ॥४८॥

'नास्माकं महती प्रज्ञा' संवादिनी, स्वप्रज्ञाविकल्पिते विसंवाददर्शनात्, तथा 'सुमहान् शास्त्रविस्तरः' तत्प्रवृत्तिहेतुत्वात्। एवं 'शिष्टाः' साधुजनसम्मताः 'प्रमाणमिह' व्यतिकरे तस्मादित्येवमस्यां दृष्टौ 'मन्यते सदा-'यत्तैराचरितं तदेव यथाशक्ति सामान्येन कर्तुं युज्यत इत्यर्थः ॥४८॥ उक्ता तारा।

अधुना बलोच्यते, तदत्राह—

सुखासनसमायुक्तं, बलाया दर्शनं दृढम्।
परा च तत्त्वशुश्रूषा, न क्षेपो योगगोचरः ॥४९॥

सुखासनसमायुक्तमिति स्थिरसुखासनवत् 'बलाया' दृष्टौ 'दर्शनं' प्रागुक्तं 'दृढं' काष्ठाग्निकणोपममिति कृत्वा, 'परा च तत्त्वशुश्रूषा' जिज्ञासासम्भवेति। 'न क्षेपो योगगोचरः' तदनुद्वेगज इति कृत्वा ॥४९॥ अमुमेवार्थमाह—

नास्यां सत्यामसत्तृष्णा, प्रकृत्यैव प्रवर्त्तते।
तदभावाच्च सर्वत्र, स्थितमेव सुखासनम् ॥५०॥

नास्यामधिकृतदृष्टौ, सत्यामसत्तृष्णा-स्थितिनिबन्धनातिरिक्तगोचरा, प्रकृत्यैव-स्वभावेनैव प्रवर्तते विशिष्टशुद्धियोगात्। तदभावाच्च-असत्तृष्णा-

भावाच्च, सर्वत्र-व्याप्त्या स्थितमेव सुखासनं, तथापरिभ्रमणाभावेन ॥५०॥

एतदेवाह—

अत्वरापूर्वक सर्वं, गमनं कृत्यमेव वा ।
प्रणिधानसमायुक्तमपायपरिहारतः ॥५१॥

अत्वरापूर्वकमनाकुलमित्यर्थ. 'सर्वं'—सामान्येन कि तदित्याह 'गमन' देवकुलादौ, कृत्यमेव वा वन्दनादि, प्रणिधानसमायुक्त—मन.प्रणिधानपुरःसर, अपायपरिहारत —दृष्ट्याद्यपायपरिहारेण ॥५१॥ उक्तं दर्शनम् ।

अस्यैव शुश्रूषामाह—

कान्तकान्तासमेतस्य, दिव्यगेयश्रुतौ यथा ।
यूनो भवति शुश्रूषा, तथाऽस्या तत्त्वगोचरा ॥५२॥

कान्तकान्तासमेतस्य—कमनीयप्रियतमायुक्तस्य, दिव्यगेयश्रुतौ यथा—किंनरादिगेयश्रुतावित्यर्थ. यूनो—वय.स्थस्य भवति शुश्रूषा—श्रोतुमिच्छा तद्गोचरैव तथाऽस्यां—दृष्टौ व्यवस्थितस्य सत. तत्त्वगोचरा—तत्त्वविषयैव शुश्रूषा भवति ॥५२॥ इय चैवम्भूतेत्याह—

बोधाम्भ स्रोतसश्चैषा, सिरातुल्या सता मता ।
अभावेऽस्याः श्रुतं व्यर्थमसिरावनिकूपवत् ॥५३॥

बोधाम्भ.स्रोतसो—बोधोदकप्रवाहस्य चैषा—शुश्रूषा, सिरातुल्या—ऽवन्ध्याऽक्षयतद्बीजकल्पतया सता मता मुनीनामिष्टा । अभावेऽस्या. शुश्रूषाया किमित्याह श्रुतं व्यर्थ-श्रमफलम् । किंवदित्याह असिरावनिकूपवत् असिरावनौ पृथिव्या कूपखनन असत्खननमेवाऽतत्फलत्वादिति ॥५३॥

इहैव व्यतिरेकमाह—

श्रुताभावेऽपि भावेऽस्या , शुभभावप्रवृत्तित. ।
फलं कर्मक्षयाख्यं स्यात्परबोधनिबन्धनम् ॥५४॥

'श्रुताभावेऽपि'—श्रवणाभावेऽपि, 'भावेऽस्या.—'शुश्रूषाया , किमित्याह 'शुभभावप्रवृत्तित.—'तद्भावस्यैव शुभत्वात् 'फलं कर्मक्षयाख्यं स्यात्—'वचनप्रामाण्येन । एतच्च 'परबोधनिबन्धनं'—प्रधानबोधकारणं वचन-प्रामाण्यादेव

॥५४॥ योगेऽक्षेपगुणमाह—

शुभयोगसमारम्भे, न क्षेपोऽस्या कदाचन ।
उपायकौशलं चापि, चारु तद्विषयं भवेत् ॥५५॥

'शुभयोगसमारम्भे'–तथाविधध्यानादौ, न क्षेपोऽस्यामधिकृतदृष्टौ सत्यां, कदाचन भवति । उपायकौशलं चापि तथाविधदेशाध्यासनादि चारु-शोभनं, तद्विषयं-शुभयोगसमारम्भविषयं,भवेदिति ॥५५॥

तथाऽस्यामेव दृष्टावभ्युच्चयमाह—

परिष्कारगतः प्रायो, विघातोऽपि न विद्यते ।
अविघातश्च सावद्यपरिहारान्महोदयः ॥५६॥

परिष्कारगत'–उपकरणगत इत्यर्थः प्रायो–बाहुल्येन विघातोऽपि–इच्छा-प्रतिबन्धो, न विद्यते–अस्यां सत्यामिति । 'अविघातश्च' किम्भूतो भवतीत्याह सावद्यपरिहारात्–प्रतिषिद्धपरिहारेण महोदयः–अभ्युदयनिःश्रेयसहेतुरित्यर्थ ॥५६॥ उक्ता बला । साम्प्रतं दीप्रामाह—

प्राणायामवती दीप्रा, न योगोत्थानवत्यलम् ।
तत्त्वश्रवणसंयुक्ता, सूक्ष्मबोधविवर्जिता ॥५७॥

प्राणायामवती चतुर्थाङ्गभावतः भावरेचकादिभावात् 'दीप्रा–' चतुर्थी दृष्टि, 'न योगोत्थानवती–'तथाविधप्रशान्तवाहितालाभेन अलमत्यर्थम् तत्त्व-श्रवणसंयुक्ता–शुश्रूषाफलभावेन सूक्ष्मबोधविवर्जिता–निपुणबोधरहितेत्यर्थ. ॥ ॥५७॥ भावरेचकादिगुणमाह—

प्राणेभ्योपि गुरुर्धर्म', सत्यामस्यामसंशयम् ।
प्राणास्त्यजति धर्मार्थं, न धर्मं प्राणसङ्कटे ॥५८॥

प्राणेभ्योऽपीन्द्रियादिभ्यो, गुरुर्धर्मो–महत्तर इत्यर्थः, सत्यामस्यामधि-कृतदृष्टौ दीप्रायाम् असंशयम्, एतत्कुत इत्याह प्राणांस्त्यजति धर्मार्थं-तथोत्स-र्गप्रवृत्त्या, न धर्मं प्राणसङ्कटेत्यजति–तथोत्सर्गप्रवृत्त्यैव ॥५८॥

अत्र प्रतिबन्धनिबन्धनमाह—

एक एव सुहृद्धर्मो, मृतमप्यनुयाति यः ।
शरीरेण समं नाशं, सर्वमन्यत्तु गच्छति ॥५९॥

एक एव सुहृद्धर्मो–नान्य, तल्लक्षणयोगात् । तदाह मृतमप्यनुयाति य इति, शरीरेण समं नाश–मयं, सर्वमन्यत्तु गच्छति स्वजनादि ॥५९॥

इत्थं सदाशयोपेतस्तत्त्वश्रवणतत्पर ।
प्राणेभ्यः परमं धर्मं, बलादेव प्रपद्यते ॥६०॥

इत्थम्-एवं सदाशयोपेत सन्, तत्त्वश्रवणतत्पर एतत्प्रधान, प्राणेभ्य परमं धर्मं बलादेव प्रपद्यते तत्स्वभावत्वात् स्वत (तत) एव न योगोत्थानमस्य ॥६०॥ तत्त्वश्रवणगुणमाह–

क्षाराम्भस्त्यागतो यद्वन्मधुरोदकयोगत ।
बीज प्ररोहमादत्ते, तद्वत्तत्त्वश्रुतेर्नर ॥६१॥

क्षाराम्भस्त्यागतो यद्वन्मधुरोदकयोगत., तन्माधुर्यानवगमेऽपि स्पष्टसवित्त्या बीज प्ररोहमादत्ते तद्वत्तत्त्वश्रुतेर्नर., तत्त्वश्रुतेरचिन्त्यसामर्थ्यान्महाप्रभावत्वादिति ॥६१॥ अस्यैव भावार्थमाह–

क्षाराम्भस्तुल्य इह च भवयोगोऽखिलो मत. ।
मधुरोदकयोगेन, समा तत्त्वश्रुतिस्तथा ॥६२॥

क्षाराम्भस्तुल्य इह च भवयोगोऽखिलो मतोऽतत्त्वश्रवणरूपोऽपि, मधुरोदकयोगेन समा तत्त्वश्रुतिस्तथा तदङ्गतया तत्त्वश्रुतिरपीति ॥६२॥

अस्या एव गुणमाह–

अतस्तु नियमादेव, कल्याणमखिलं नृणाम् ।
गुरुभक्तिसुखोपेतं, लोकद्वयहितावहम् ॥६३॥

अतस्त्वित्यत एव तत्त्वश्रुते किमित्याह 'नियमादेव कल्याण' परोपकारादि 'अखिलं नृणा-' तत्त्वश्रुतेस्तथाविधाशयभावात्, तदेव विशिष्यते 'गुरुभक्ति-सुखोपेतं' कल्याण, तदाज्ञया तत्करणस्य तत्त्वत कल्याणत्वात्, अत एवाह 'लोकद्वयहितावहं' अनुबन्धस्य गुरुभक्तिसाध्यत्वादिति ॥६३॥

अस्य एव विशेषत परं फलमाह–

गुरुभक्तिप्रभावेन, तीर्थकृद्दर्शनं मतम् ।
समापत्त्यादिभेदेन, निर्वाणैकनिबन्धनम् ॥६४॥

'गुरुभक्तिप्रभावेन-' गुरुभक्तिसामर्थ्येन तदुपात्तकर्मविपाकत इत्यर्थः, किमित्याह तीर्थकृद्दर्शनं मतं-भगवद्दर्शनमिष्टम्, कथमित्याह समापत्त्यादिभेदेन-'समापत्तिर्ध्यानतः स्पर्शना' तया, आदिशब्दात्तन्नामकर्मबन्धविपाकतस्तद्भावापत्त्युपपत्तिपरिग्रहः। तदेव विशिष्यते निर्वाणैकनिबन्धनं-अवन्ध्यमोक्षकारणमसाधारणमित्यर्थः ॥६४॥ इह प्रतिपिद्धसूक्ष्मबोधलक्षणाभिधित्सयाह—

सम्यग्घेत्वादिभेदेन, लोके यस्तत्त्वनिर्णयः ।
वेद्यसंवेद्यपदतः, सूक्ष्मबोधः स उच्यते ॥६५॥

सम्यग् अविपरीतेन विधिना, हेत्वादिभेदेनेति हेतुस्वरूपफलभेदेन, लोके-विद्वत्समवाये, यस्तत्त्वनिर्णयः-परमार्थपरिच्छेदः कुत इत्याह वेद्यसंवेद्यपदतः-वक्ष्यमाणलक्षणाद्वेद्यसंवेद्यपदात्, 'सूक्ष्मबोधः स उच्यते' निपुण इत्यर्थः ॥६५॥ इहैव विशेषतः प्रवृत्तिनिमित्तमाह—

भवाम्भोधिसमुत्तारात्कर्मवज्रविभेदतः ।
ज्ञेयव्याप्तेश्च कार्त्स्न्येन, सूक्ष्मत्वं नायमत्र तु ॥६६॥

भवाम्भोधिसमुत्तारात्-भवसमुद्रसमुत्तारणाल्लोकोत्तरप्रवृत्तिहेतुतया तथा कर्मवज्रविभेदतः-कर्मवज्रविभेदेन विभेदतस्त्वपुनर्ग्रहणतः ज्ञेयव्याप्तेश्च कार्त्स्न्येनानन्तधर्मात्मकतत्त्वप्रतिपत्त्या, सूक्ष्मत्वं-निपुणत्वं बोधस्य, नायमत्र तु-नायं सूक्ष्मो बोधः अत्र-दीप्रायां दृष्टौ, अवस्थासु च तत्त्वतो ग्रन्थिभेदाऽसिद्धेरिति ॥६६॥

अवेद्यसंवेद्यपदं, यस्मादासु तथोल्बणम् ।
पक्षिच्छायाजलचर-प्रवृत्त्याभमतः परम् ॥६७॥

अवेद्यसंवेद्यपदं-वक्ष्यमाणलक्षणं, यस्मादासु-मित्राद्यासु चतसृषु दृष्टिषु, तथोल्बणं-तेन निवृत्त्यादिपदप्रकारेण प्रबलमुद्धतमित्यर्थः, पक्षिच्छायाजलचर-प्रवृत्त्याभ-पक्षिच्छायायां तद्धिया जलचरप्रवृत्त्याकारम्। अतः, परं-वेद्यसंवेद्य-

पदमासु न तात्त्विकमित्यर्थं, ग्रन्थिभेदाऽसिद्धेरित्येतदपि पदमासु चरमयथाप्रवृत्तकरणेनैवेत्याचार्या· ॥६७॥ किमेतदेवमित्याह—

अपायशक्तिमालिन्य, सूक्ष्मबोधवि(नि)बन्धकृत् ।
नैतद्वतोऽय तत्त्वे, कदाचिदुपजायते ॥६८॥

अपायशक्तिमालिन्य नरकाद्यपायशक्तिमलिनत्वम् किमित्याह सूक्ष्मबोधवि(नि)बन्धकृत्—अपायहेत्वासेवनक्लिष्टबीजभावेन नैतद्वतोऽपायशक्तिमालिन्यवतो अस्य—सूक्ष्मो बोध तत्तस्मात 'तत्त्वे इति' तत्त्वविषये कदाचिदुपजायते अवन्ध्यस्यूलबोधबीजभावादित्यर्थं ॥६८॥ यस्मादेवम्—

अपायदर्शन तस्माच्छ्रुतदीपान्न तात्त्विकम् ।
तदाभालम्बन त्वस्य, तथा पापे प्रवृत्तितः ॥६९॥

अपायदर्शनं—दोषदर्शनं तस्माच्छ्रुतदीपादागमात, न तात्त्विकं-न पारमार्थिकमस्येति योग· । तदाभालम्बन तु—परमार्थाभाविषयं पुनर्भवति भ्रान्त्या, कुत इत्याह—तथा पापे प्रवृत्तित —तथा चित्रानाभोगप्रकारेण पापे प्रवृत्तेरिति ॥६९।

अतोऽन्यदुत्तरास्वस्मात्पापे कर्मागसोऽपि हि ।
तप्तलोहपदन्यास—तुल्या वृत्ति· क्वचिद्यदि ॥७०॥

अतोऽन्यदुत्तरास्विति—अक्रमादवेद्यपदादन्यद्वेद्यसंवेद्यपदम्, उत्तरास्विति स्थिराद्यासु चतसृषु दृष्टिषु । अस्माद्वेद्यसंवेद्यपदात्, पापे-पापकर्मणि हिंसादौ कर्मागसोऽपि हि—कर्मापराधादपि किमित्याह तप्तलोहपदन्यासतुल्या वृत्ति-संवेगसारा पापे क्वचिद्यदि भवति, प्रायस्तु न भवत्येवेति ॥७०॥

किमित्येवम्भूतेत्याह—

वेद्यसंवेद्यपदत, संवेगातिशयादिति ।
चरमैव भवत्येषा, पुनर्दुर्गत्ययोगतः ॥७१॥

वेद्यसंवेद्यपदतो—वक्ष्यमाणलक्षणात्, संवेगातिशयादित्यतिशयसंवेगेन चरमैव भवत्येषा—पापवृत्ति· । कुत इत्याह पुनर्दुर्गत्ययोगत श्रेणिकाद्युदाहरणात् । 'प्रतिपतितसम्यग्दर्शनानामनन्तसंसारिणामनेकधा दुर्गतियोग इति यत्किंचिदेतत, न, अभिप्रायापरिज्ञानात, क्षायिकसम्यग्दृष्टेरेव नैश्चयिकवेद्यसंवेद्य-

पद्भाव इत्यभिप्रायात्, व्यावहारिकं अपि तु एतदेव चारु, सत्येतस्मिन् प्रायो दुर्गतावपि मानसदुःखाभावात्, वज्रतन्दुलवदस्य भावपाकाऽयोगात् । अचारु पुनरेकान्तत एव अतोऽन्यदिति ॥७१॥ यदाह—

अवेद्यसंवेद्यपदमपदं परमार्थतः ।
पदं तु वेद्यसंवेद्यपदमेव हि योगिनाम् ॥७२॥

अवेद्यसंवेद्यपदमिति मिथ्यादृष्ट्याशयस्थानम्, अत एवाह 'अपदं परमार्थतः'—यथावस्थितवस्तुतत्त्वाऽनापादनात् । 'पदं तु'—पदं पुनः, 'वेद्यसंवेद्यपदमेव' वक्ष्यमाणलक्षणमन्वर्थयोगादिति ॥७२॥ तथा चाह—

वेद्यं संवेद्यते यस्मिन्नपायादिनिबन्धनम् ।
तथाऽप्रवृत्तिबुद्ध्यापि, स्त्र्याद्यागमविशुद्धया ॥७३॥

वेद्यं—वेदनीयं वस्तुस्थित्या तथाभावयोगिसामान्येनाविकल्पकज्ञानग्राह्यमिति योऽर्थः, संवेद्यते—क्षयोपशमानुरूपं निश्चयबुद्ध्या विज्ञायते, 'यस्मिन्पदे'—आशयस्थाने किंविशिष्टमित्याह अपायादिनिबन्धनं-नरकस्वर्गादिकारणम् स्त्र्यादि तथा—तेन प्रकारेण येन सामान्यानुविद्धं अप्रवृत्तिबुद्ध्यापि—तदुपादानत्यागाशयात्मिकया संवेद्यते, स्त्र्यादि वेद्यं आगमविशुद्धया—श्रुतापनीतविपर्ययमलया । प्रधानमिदमेव बन्धकारणं प्रेक्षावतामपीति स्त्र्यादिग्रहणम् ॥७३॥

तत्पदं साध्ववस्थानाद्भिन्नग्रन्थ्यादिलक्षणम् ।
अन्वर्थयोगतस्तन्त्रे वेद्यसंवेद्यमुच्यते ॥७४॥

तत्पदमिति पदनात्पदमाशयस्थानं, 'साध्ववस्थानात्—' परिच्छेदात्सम्यगवस्थानेन, भिन्नग्रन्थ्यादिलक्षणं भिन्नग्रन्थिदेशविरतिरूपम् किमित्याह 'अन्वर्थयोगतः—'अन्वर्थयोगेन, तन्त्रे—सिद्धान्ते, वेद्यसंवेद्यमुच्यते—वेद्यं संवेद्यतेऽनेनेति कृत्वा ॥७४॥ तस्मादन्यदाह—

अवेद्यसंवेद्यपदं, विपरीतमतो मतम् ।
भवाभिनन्दिविषयं, समारोपसमाकुलम् ॥७५॥

अवेद्यसंवेद्यपदं विपरीतमतो—वेद्यसंवेद्यपदात् मतमिष्टम्, तथाहि—अवेद्यमवेदनीयं वस्तुस्थित्या न तथाभावयोगिसामान्येनाप्यविकल्पकज्ञानग्राह्य,

तथाविधम्समानपरिणामानुपपत्ते., त संवेद्यते अज्ञानावरणक्षयोपशमानुरूप निश्च-यबुद्धयोपप्लवमात्रया मृगतृष्णोदकवज्ज्ञायते यस्मिन्पदे तत्तथाविधम्। अत एवाह भवाभिनन्दिविषयं एतद्, भवाभिनन्दी वक्ष्यमाणलक्षणः, समारोप-समाकुलमिति--मिथ्या वदोषतोऽपायगमनाभिमुख (खो न तथा पिङ्गलित ?) मित्यर्थ ॥७५॥ भवाभिनन्दिलक्षणमाह—

क्षुद्रो लाभरतिर्दीनो, मत्सरी भयवान् शठः ।
अज्ञो भवाभिनन्दी स्यान्निष्फलारम्भसङ्गतः ॥७६॥

क्षुद्र –कृपण. । लाभरति–याञ्चाशील । दीन –सदैवाकल्याणदर्शी । मत्सरो–परकल्याणदुःस्थित । भयवान्नित्यभीत. । शठो–मायावी। अज्ञो–मूर्ख भवाभिनन्दी–संसारबहुमानी स्यादेवम्भूतो, निष्फलारम्भसङ्गत –सर्वत्राऽतत्त्वा-भिनिवेशान्निति ॥७६॥ यदि नामैव तत. किमित्याह–

इत्यसत्परिणामानुविद्धो बोधो न सुन्दर' ।
तत्सङ्गादेव नियमाद्विषसम्पृक्तकान्नवत् ॥७७॥

इत्येव–भवाभिनन्दिपरिणामे सति अस्याऽसत्परिणामत्वात् असत्परिणा-मानुविद्धो बोध. सामान्येन न सुन्दर । कुत इत्याह तत्सङ्गादेव–विवक्षिताऽ-सत्परिणामसम्बधादेव, नियमाद्–किमित्याह विषसम्पृक्तकान्नवत् इति निदर्श-नमात्रम् ॥७७॥ फलत एतदेवाह—

एतद्वन्तोऽत एवेह, विपर्यासपरा नराः ।
हिताहितविवेकान्धाः, खिद्यन्ते साम्प्रतेक्षिण' ॥७८॥

एतद्वन्तोऽवेद्यपदवन्त अत एव–कारणात् इह–लोके, विपर्यासप्रधाना नरा. किमित्याह हिताहितविवेकान्धा –एतद्रहिता इत्यर्थ , अत एवाह खिद्यन्ते साम्प्रतेक्षिण सन्त इति ॥७८॥ तथा च—

जन्ममृत्युजराव्याधिरोगशोकाद्युपद्रुतम् ।
वीक्षमाणा अपि भवं, नोद्विजन्तेऽतिमोहतः ॥७९॥

जन्म–प्रादुर्भावलक्षण, मृत्यु.–प्राणत्यागस्वरूप , जरा–वयोहान्यात्मिका, व्याधि.–कुष्ठादिलक्षण , रोगो–विशुचिकाद्यातङ्क , शोक–इष्टवियोगादिजो मनोविकार , आदिशब्दाद्ग्रहादिपरिग्रह , एभिरुपद्रुत कदर्थित वीक्षमाणा अपि-

पश्यन्तोऽपि सन्तः भवं-संसार, नोद्विजन्तेऽस्मादिति प्रक्रम, अतिमोहतो हेतोरिति ॥७९॥ तथाह्य( ? चा)मीषां किमित्याह—

कुकृत्यं कृत्यमाभाति, कृत्यं चाकृत्यवत्सदा ।
दु खे सुखधियाकृष्टा , कच्छूकण्डूयकादिवत् ॥८०॥

कुकृत्यं-प्राणातिपातारम्भादि कृत्यमाभाति मोहात् , कृत्य चाहिंसाऽनारम्भादि च अकृत्यवत्सदाऽऽभाति मोहादेव । दु खे-समारम्भादौ सुखधिया-सुखबुद्ध्या आकृष्टा-आकर्षिताः किंवदित्याह कच्छूकण्डूयकादिवत् कच्छू -पामा तस्याः कण्डूयका'-कण्डूयन्त इति कण्डूयका , आदिशब्दात्कृमिप्रतुधमानाग्निसेवककुष्ठिपरिग्रह. ॥८०॥ अमुमेवार्थं स्पष्टयन्नाह—

यथा कण्डूयनेष्वेषा, धीर्न कच्छूनिवर्तने ।
भोगाङ्गेषु तथैतेषा, न तदिच्छापरिक्षये ॥८१॥

कस्यचित्कण्डूयकस्य कण्डूयनातिरेकात्परिक्षीणनखस्य सिकताक्षितिनिवासात्कथञ्चिदनवाप्ततृणकण्डूविनोदकस्य भिक्षापुटिकाद्यैर्गृहीततृणपूलकेन वैद्यपथिकेन दर्शनं बभूव । स तेन तृणमेकं याचितो, दत्तं चानेन तत्तस्मै । परितुष्टोऽसौ हृदयेन, चिन्तित च ससन्तोषं 'अहो धन्य खल्वयं यस्यैतान्यन्ति कण्डूयनानि,' पृष्टश्च स क्व खल्वेतान्येवमतिप्रभूतान्यवाप्यन्ते ? तेनोक्तम्-लाटदेशादौ, प्रयोजन किञ्च तवैभिः ? तेनोक्त कच्छूकण्डूविनोदनम् । पथिक आह-यद्येव, तत किमेभि. ? कच्छूमेव ते सप्तरात्रेणापनयामि "कुरुपयोगं त्रिफलाया" । स पुनराह-कच्छ्वपगमे कण्डूविनोदाभावे किं फलं जीवितस्य, तदल त्रिफलया, क्वैतान्यवाप्यन्त इत्येतदेव कथय, इति श्लोकगर्भार्थः ॥ अक्षरगमनिका तु यथा कण्डूयनेष्वेषां तथैतेषा भवाभिनन्दिना धीर्न तदिच्छापरिक्षये- न भोगेच्छानिवृत्तौ, तत्त्वानभिज्ञतयैव वय.परिपाकेऽपि वाजीकरणादरात । इच्छाग्रहणमिह भोगक्रियोपलक्षणम् ॥८१॥ यतश्चैवमत —

आत्मानं पाशयन्त्येते, सदाऽसच्चेष्टया भृशम् ।
पापधूल्या जडाः कार्यमविचार्यैव तत्त्वतः ॥८२॥

आत्मान–जीवं पाशयन्ति- गण्डयन्ति एतेऽधिकृतसत्त्वा सदा–सर्वकालं असच्चेष्टया-प्राणातिपातारम्भरूपया हेतुभूतया भृशमत्यर्थम् । कया पाशयन्ती-त्याह-पापधूल्या-ज्ञानावरणीयादिलक्षणया जडा–मन्दा. स्वार्थमविचार्यैव तत्त्वत.-परमार्थेन क्षणिककुसुखसक्ततयाऽऽत्मानं पाशयन्तीति ॥८२॥ तथा हि—

धर्मबीजं परं प्राप्य, मानुष्यं कर्मभूमिषु ।
न सत्कर्मकृषावस्य, प्रयतन्तेऽल्पमेधस' ॥८३॥

धर्मबीजं-धर्मकारणं पर-प्रधानं प्राप्यासाद्य किं तदित्याह मानुष्यं-मानुषत्वं । क्वेत्याह कर्मभूमिषु-भरताद्यासु । किमित्याह न सत्कर्मकृषौ-धर्मबीजाधानादि-रूपायां अस्य-धर्मबीजस्य प्रयतन्तेऽल्पमेधसः-अल्पमतय इत्यर्थ. ॥८३॥

किन्तर्हि—

बडिशामिषवत्तुच्छे, कुसुखे दारुणोदये ।
सक्तास्त्यजन्ति सच्चेष्टां, धिगहो दारुणं तम. ॥८४॥

बडिशामिषवदिति निदर्शनं मत्स्यगलमांसवत तुच्छे-अल्पे कुसुखे-दुष्ट-भोगजे दारुणोदये-रौद्रविपाके, समयपरिभाषेयम् , सक्ता–गृद्धा किमित्याह त्यजन्ति सच्चेष्टां-धर्मसाधनम् , कर्मदोषोऽयमित्याह 'धिगहो दारुणं तम.'-कष्टमज्ञानमिति योऽर्थ ॥८४॥ उपसंहरन्नाह—

अवेद्यसंवेद्यपदमान्ध्यं दुर्गतिपातकृत् ।
सत्सङ्गागमयोगेन, जेयमेतन्महात्मभिः ॥८५॥

अवेद्यसंवेद्यपदमुक्तलक्षणं, आन्ध्यं-अन्धभावरूपम् । अत एवाह दुर्गति-पातकृत्-दुर्गतिपातकरणशीलम् , सत्सङ्गागमयोगेन–विशिष्टसङ्गागमसम्बन्धे-नेत्यर्थ' एकवद्भाव' पुस्त्वप्राधान्यख्यापनपर । जेयमेतदवेद्यसंवेद्यपदं, महा-त्मभि –पुम्भि अस्यामेव भूमिकायामन्यदा जेतुमशक्यत्वात् । अत एवानुवाद-परोऽप्यागम इति योगाचार्या. अयोग्यनियोगाऽसिद्धेरिति ॥८५॥

अत एव जयलिङ्गान्याह—

जीयमाने च नियमादेतस्मिंस्तत्त्वतो नृणाम् ।
निवर्तते स्वतोऽत्यन्तं, कुतर्कविषमग्रहः ॥८६॥

जीयमाने च नियमादेतस्मिन्नवेद्यसंवेद्यपदे महामिथ्यात्वनिबन्धने पशुत्वादिशब्दवाच्ये तत्त्वत.-परमार्थेन, नृणा-पुंसां निवर्तते स्वत-आत्मनैवाऽपरोपदेशेन, निमित्ताभावे नैमित्तिकाभावात् अत्यन्तं-नितरां सम्यग्ज्ञानयोगात्, आगमप्रामाण्यावगमात् कुतर्कविषमग्रहो-दृष्टापायहेतुत्वेन ग्रह इव ग्रहः ॥८६॥

किंविशिष्टोऽयमित्याह—

बोधरोगः शमाऽपायः, श्रद्धाभङ्गोऽभिमानकृत् ।
कुतर्कश्चेतसो व्यक्तं, भावशत्रुरनेकधा ॥८७॥

बोधरोगस्तद्यथावस्थितोपघातभावात्, शमाऽपायोऽसदभिनिवेशजनकत्वात्, श्रद्धाभङ्ग आगमार्थोऽप्रतिपत्तेः, अभिमानकृन्मिथ्याभिमानजनकत्वात्, एवं 'कुतर्क' आगमनिरपेक्ष इत्यर्थ., किमित्याह चेतस. अन्तःकरणस्य 'भावशत्रु'—परमार्थरिपुः अनेकधा—आर्यापवादादिकारणेन ॥८७॥

यतश्चैवमतः किमित्याह—

कुतर्केऽभिनिवेशस्तन्न युक्तो मुक्तिवादिनाम् ।
युक्तः पुनः श्रुते शीले, समाधौ च महात्मनाम् ॥८८॥

कुतर्के—उक्तलक्षणे, अभिनिवेशस्तथातद्ग्रहरूपः, किमित्याह—न युक्तः, केषामित्याह मुक्तिवादिनां—संन्यासिनामित्यर्थ. । युक्त. पुनः श्रुते—आगमे शीले—परद्रोहविरतिलक्षणे समाधौ च—ध्यानफलभूते महात्मना मुक्तिवादिनामभिनिवेशो युक्त इति ॥८८॥

बीजं चास्य परं सिद्धमवन्ध्यं सर्वयोगिनाम् ।
परार्थकरणं येन, परिशुद्धमतोऽत्र च ॥८९॥

बीजं चास्य श्रुतादेः परं सिद्ध—प्रधानं प्रतिष्ठितम् अवन्ध्यं—नियतफलदायि सर्वयोगिना—कुलयोगिप्रभृतीनाम् । किं तदित्याह परार्थकरणं—परप्रयोजननिष्पादनं, येन—कारणेन परिशुद्धं—अन्यानुपघातेन । अतः कारणात्—अत्र च परार्थकरणे युक्तोऽभिनिवेश इति ॥८९॥

कुतर्कोऽसारतामेवाभिधातुमाह—

अविद्यासङ्गता प्रायो, विकल्पाः सर्व एव यत् ।
तद्योजनात्मकश्चैष, कुतर्कः किमनेन तत् ॥९०॥

अविद्यासङ्गताः-ज्ञानावरणीयादिसम्पृक्ताः प्रायो-बाहुल्येन विकल्पाः सर्व एव-शब्दविकल्पा अर्थविकल्पाश्च, यत्तद्योजनात्मको-विकल्पयोजनात्मकः चैष-गोमयपायसादिविकल्पनेन कुतर्कः-उक्तलक्षणः, किमनेन तत्-न किञ्चिदित्यर्थः ॥९०॥ किं च—

जातिप्रायश्च सर्वोऽयं, प्रतीतिफलबाधितः ।
हस्ती व्यापादयत्युक्तौ, प्राप्ताऽप्राप्तविकल्पवत् ॥९१॥

'जातिप्रायश्च'-दूषणाभासप्रायश्च सर्वोऽयं कुतर्कः 'प्रतीतिफलबाधित' इति कृत्वा, एतदेवाह-हस्ती व्यापादयत्युक्तौ-मेण्ठेन, किमिवेत्याह प्राप्ताप्राप्तविकल्पवत् इति । कश्चिन्नैयायिकश्छात्रः कुतश्चिदागच्छन् अवशीभूतमत्तहस्त्यारूढेन केनचिदुक्तः, भो ! भो ! त्वरितमपसर, हस्ती व्यापादयति इति च । तथाऽपरिणतन्यायशास्त्र आह "रे रे बठर ! किमेवं युक्तिबाह्यं प्रलपसि ! तथाहि-"किमयं प्राप्तं व्यापादयति किं वाऽप्राप्तमिति ? । आद्यपक्षे भवत एव व्यापत्तिप्रसङ्गः, प्राप्तिभावात्-[द्वितीये त्रिभुवनस्य, अप्राप्त्यविशेषात् ]" एवं यावदाह तावद्धस्तिना गृहीतः, स कथमपि मेण्ठेन मोचित इति । जातिप्रायता सर्वत्र भिन्नार्थग्रहणस्वभावसंवेदनवेदने तद्गताकारविकल्पनस्यैवम्प्रायत्वादिति चर्चितमन्यत्र ॥९१॥

किञ्च—

स्वभावोत्तरपर्यन्त, एषोऽसावपि तत्त्वतः ।
नार्वाग्दृग्गोचरो न्यायादन्यथाऽन्येन कल्पितः ॥९२॥

स्वभावोत्तरपर्यन्त एष कुतर्कः, अत्र च वस्तुस्वभावैरुत्तरं वाच्यमिति वचनात् एवमग्निर्दहत्यापः क्लेदयन्तीति स्वभाव एषामिति । असावपि स्वभावः तत्त्वतः-परमार्थेन नार्वाग्दृग्गोचरो-न छद्मस्थविषयः न्यायाद्-न्यायेन परप्रसिद्धेन किम्भूतः सन्नित्याह-अन्यथा-प्रकारान्तरेण, अन्येन-प्रतिवादिना, कल्पितः सन्निति । तथा हि-अथ वस्तुस्वभावैरुत्तरं वाच्यमिति सर्वत्रैव तथा तत्तत्सिद्धौ

वक्तुं पार्यते। कथम्? येन तदर्थक्रियाकरणस्वभावस्तेन तां करोति न पुनः क्षणिकतया, तस्याः सर्वभावेष्वेवाभ्युपगमात्, यत कुतश्चित्तदर्थक्रियाभावप्रसङ्गात्तन्निबन्धनाविशेषादिति। एवमग्निः क्लेदयत्यप्सन्निधौ तथाऽऽपो दहन्त्यग्निसन्निधौ तथास्वभावत्वादेव। स्वभाववैचित्र्यान्नात्रापि लोकबाधामन्तरेणाऽपरो वा स्वभावो, दृष्टान्तमात्रस्य सर्वत्र सुलभत्वात्। तदेवमसमञ्जसकारी कुतर्क इत्यैदम्पर्यम् ॥९२॥ अमुमेवार्थं विशेषेणाभिधातुमाह—

अतोऽग्निः क्लेदयत्यम्बुसन्निधौ दहतीति च।
अम्ब्वग्निसन्निधौ तत्स्वाभाव्यादित्युदिते तयोः ॥९३॥

यतो नार्वाग्दृग्गोचरोऽधिकृतस्वभावः, अतोऽस्मात्कारणात् "अग्निः क्लेदयति, अध्यक्षविरोधपरिहारायाह अम्बुसन्निधौ इति। दहति चाऽम्बु, न प्रतीतिबाधेत्याह तत्स्वाभाव्यात्तयोः अग्न्यम्बुनोरिति" उदिते सत्यपि परवादिना ॥९३॥ किमित्याह—

कोशपानादृते ज्ञानोपायो नास्त्यत्र युक्तितः।
विप्रकृष्टोऽप्ययस्कान्तः स्वार्थकृद् दृश्यते यतः ॥९४॥

कोशपानादृते—कोशपानं विना, ज्ञानोपायो नास्त्यत्र—स्वभावव्यतिकरे, युक्तितः—शुष्कतर्कयुक्त्या, कश्चिदपरो दृष्टान्तोऽप्यस्यार्थस्योपोद्बलको विद्यते न चेत्याह विप्रकृष्टोऽप्ययस्कान्तः—लोहाकर्षः उपलविशेषः, स्वार्थकृत्—लोहाकर्षादिस्वकार्यकरणशीलः, दृश्यते यतः, लोके स हि विप्रकृष्ट एव न सन्निकृष्टः, लोहमेव न ताम्रादि, आकर्षत्येव न कर्तयति, तदित्थमस्यैवाग्न्यादीनां तथास्वभावकल्पनं केन बाध्यते? न केनचिदिति भावनीयम् ॥९४॥

उपसंहरन्नाह—

दृष्टान्तमात्रं सर्वत्र यदेवं सुलभं क्षितौ।
एतत्प्रधानस्तत्केन स्वनीत्यापोद्यते ह्ययम् ॥९५॥

दृष्टान्तमात्रं—साध्ये वस्तुनि लोकप्रतीतिबाधितं सर्वत्राऽविशेषेण यदेवं—उक्तनीत्या सुलभं क्षितौ पृथिव्याम्। एतत्प्रधानोऽयं कुतर्कः, केनापोद्यते—बाध्यते, न केनचित्, स्वनीतिविरोधादित्यर्थः ॥९५॥ इहैव दृष्टान्तमाह—

द्विचन्द्रस्वप्नविज्ञाननिदर्शनबलोत्थित. ।
निरालम्बनता सर्वज्ञानाना साधयन् यथा ॥९६॥

द्विचन्द्रस्वप्नविज्ञाननिदर्शनबलोत्थित इति निदर्शनमुदाहरणमेतत्साम-र्थ्योपजात निरालम्बनतामालम्बनशून्यतां, सर्वज्ञानाना-मृगतृष्णिकाजलादि-गोचराणाम् अविशेषेण-सामान्येन, साधयन् यथा केनापोद्यते ! ॥९६॥

न चैवं तत्त्वसिद्धिरित्याह—

सर्वं सर्वत्र चाप्नोति यदस्मादसमञ्जसम् ।
प्रतीतिबाधित लोके तदनेन न किञ्चन ॥९७॥

सर्वं निरवशेषं साध्यमिति प्रक्रम 'सर्वत्र च'-सर्वत्रैव वस्तुनि, प्राप्नोति यदस्मात्कुतर्कात्, असमञ्जसमतिप्रसङ्गेन, प्रतीतिबाधित लोके तथाविधदृष्टा-न्तमात्रसारं, तदनेन न किञ्चन कुतर्केण ॥९७॥ इतश्चैतदेवमित्याह—

अतीन्द्रियार्थसिद्ध्यर्थं यथाऽऽलोचितकारिणाम् ।
प्रयास. शुष्कतर्कस्य न चासौ गोचर' क्वचित् ॥९८॥

अतीन्द्रियार्थसिद्ध्यर्थ-धर्मादिसिद्ध्यर्थमित्यर्थ. । यथालोचितकारिणा प्रेक्षावता, प्रयास'-प्रवृत्त्युत्कर्ष., शुष्कतर्कस्याधिकृतस्य, न चातीन्द्रियोऽर्थो गोचरो विषय क्वचिदिति ॥९८॥

गोचरस्त्वागमस्यैव ततस्तदुपलब्धित. ।
चन्द्रसूर्योपरागादिसंवाद्यागमदर्शनात् ॥९९॥

गोचरस्तु-गोचर. पुन., आगमस्यैवातीन्द्रियोऽर्थ । कुत इत्याह ततस्त-दुपलब्धित.-आगमादतीन्द्रियार्थोपलब्धित. । एतदेवाह चन्द्रसूर्योपरागादिसं-वाद्यागमदर्शनात्, लौकिकोऽयमर्थ इति भावनीयम् ॥९९॥ उपसंहरन्नाह—

एतत्प्रधानः सच्छ्राद्ध शीलवान् योगतत्पर ।
जानात्यतीन्द्रियानर्थांस्तथा चाह महामति. ॥१००॥

एतत्प्रधान इत्यागमप्रधान, सच्छ्राद्ध-प्राज्ञ., शीलवान्-परद्रोहविर-तिमान्, योगतत्पर-सदा तदभियुक्त, एवम्भूत' सन् जानात्यतीन्द्रियान-र्थान्-धर्मादीन् । तथा चाह महामतिः पतञ्जलि. ॥१००॥ किमित्याह—

आगमेनानुमानेन योगाभ्यासरसेन च ।
त्रिधा प्रकल्पयन् प्रज्ञा लभते तत्त्वमुत्तमम् ॥१०१॥

आगमेनाप्तवचनेन लक्षणेन, अनुमानेन–लिङ्गाल्लिङ्गिज्ञानरूपेण, योगाभ्यासरसेन च विहितानुष्ठानात्मकेन, त्रिधा प्रकल्पयन्प्रज्ञामुक्तक्रमेणैव, अन्यथा हि प्रवृत्त्यसिद्धेः, किमित्याह–'लभते तत्त्वमुत्तमं' पापसंमोहनिवृत्त्या श्रुतादिभेदेन ॥१०१॥ अमुमेवार्थमाह—

न तत्त्वतो भिन्नमताः सर्वज्ञा बहवो यतः ।
मोहस्तदधिमुक्तीनां[‡] तद्भेदाश्रयणं ततः ॥१०२॥

न तत्त्वतः परमार्थेन, भिन्नमता भिन्नाभिप्रायाः, सर्वज्ञा बहवो यतो -यस्मात् । मोहस्तदधिमुक्तीनां–सर्वातिशयश्राद्धानां, तद्भेदाश्रयणं सर्वज्ञभेदाङ्गीकरणं, ततस्तस्मादिति ॥१०२॥ कथमित्याह—

सर्वज्ञो नाम यः कश्चित्पारमार्थिक एव हि ।
स एक एव सर्वत्र व्यक्तिभेदेऽपि तत्त्वतः ॥१०३॥

सर्वज्ञो नाम यः कश्चिदर्हदादि, पारमार्थिक एव हि-निरुपचरितः स एक एव सर्वत्र सर्वज्ञत्वेन व्यक्तिभेदेऽपि तत्त्वतः ऋषभादिलक्षणे सति ॥१०३॥

प्रतिपत्तिस्ततस्तस्य सामान्येनैव यावता ।
ते सर्वेऽपि तमापन्ना इति न्यायगतिः परा ॥१०४॥

प्रतिपत्तिः ततस्तस्य-सर्वज्ञस्य सामान्येनैव यावतां-तन्त्रान्तरीयाणामपि, ते सर्वेऽपि तमापन्नाः सर्वज्ञं मुख्यमेवेति न्यायगतिः परा, तमन्तरेण तत्प्रतिपत्तेरसिद्धेः ॥१०४॥

विशेषस्तु पुनस्तस्य कार्त्स्न्येनासर्वदर्शिभिः ।
सर्वैर्न ज्ञायते तेन तमापन्नो न कश्चन ॥१०५॥

विशेषस्तु भेद एव, पुनस्तस्य सर्वज्ञस्य, कार्त्स्न्येनासर्वदर्शिभिः-प्रमातृभिः सर्वैर्न विज्ञायते, तददर्शनात्, दर्शनेऽपि तज्ज्ञानाऽगतेः, तेन कारणेन तं-सर्वज्ञं आपन्नः-प्रतिपन्नो, न कश्चनाऽसर्वदर्शी ॥१०५॥

---

[‡]अधिमुक्तिः=श्रद्धा ।

तस्मात्सामान्यतोऽप्येनमभ्युपैति य एव हि।
निर्व्याज तुल्य एवासौ तेनांशेनैव धीमताम् ॥१०६॥

तस्मात्सामान्यतोऽप्येनं सर्वज्ञ, अभ्युपैति य एव हि-कश्चिदमर्वाग्दर्शी, निर्व्याजमौचित्ययोगेन तदुक्तपालनपरः। तुल्य एवासौ तेनांशेन-सर्वज्ञप्रतिपत्तिलक्षणेन, धीमतामनुपहतबुद्धीनामित्यर्थ ॥१०६॥

अमुमेवार्थं निदर्शनगर्भमाह—

यथैवैकस्य नृपतेर्बहवोऽपि समाश्रिताः।
दूरासन्नादिभेदेऽपि तद्भृत्याः सर्व एव ते ॥१०७॥

यथैवैकस्य नृपते–कस्यचिद्विवक्षितस्य, बहवोऽपि समाश्रिता–पुमांसो, दूरासन्नादिभेदेऽपि सति तथा नियोगादिभेदेन कृते, तद्भृत्या–विवक्षितनृपाभिभृत्याः, सर्वे एव ते समाश्रिता इति ॥१०७॥ दार्ष्टान्तिकयोजनमाह—

सर्वज्ञतत्त्वाऽभेदेन तथा सर्वज्ञवादिनः।
सर्वे तत्तत्त्वगा ज्ञेया भिन्नाचारस्थिता अपि ॥१०८॥

सर्वज्ञतत्त्वाभेदेन–यथोदितनीत्या हेतुभूतेन तथा–नृपतिसमाश्रितबहुपुरुषवत् सर्वज्ञवादिन. सर्वे-जिनादिमतभेदावलम्बिन. तत्तत्त्वगा.-सर्वज्ञतत्त्वगा, ज्ञेया. भिन्नाचारस्थिता अपि तथाधिकारभेदेनेति ॥१०८॥ उपसंहरन्नाह—

न भेद एव तत्त्वेन सर्वज्ञाना महात्मनाम्।
तथा नामादिभेदेऽपि भाव्यमेतन्महात्मभिः ॥१०९॥

न भेद एव तत्त्वेन–परमार्थेन, सर्वज्ञानां महात्मना–भावसर्वज्ञानामित्यर्थः। तथेष्टानिष्टनामादिभेदेऽपि सति, भाव्यमेतन्महात्मभिः श्रुतमेधाऽसमोहसारया प्रज्ञया ॥१०९॥ शास्त्रगर्भमेवोपपत्त्यन्तरमाह—

चित्राऽचित्रविभागेन यच्च देवेषु वर्णिता।
भक्तिः सद्योगशास्त्रेषु ततोऽप्येवमिदं स्थितम् ॥११०॥

चित्राऽचित्रविभागेन–वक्ष्यमाणलक्षणेन यच्च देवेषु वर्णिता-लोकपालमुक्तादिषु भक्ति सद्योगशास्त्रेषु–सौवाध्यात्मचिन्ताशास्त्रेषु, ततोऽपि कारणात एवमिदं स्थित–प्रस्तुतमिति ॥११०॥ अमुमेवार्थं स्पष्टयन्नाह—

संसारिषु हि देवेषु भक्तिस्तत्कायगामिनाम् ।
तदतीते पुनस्तत्त्वे तदतीतार्थयायिनाम् ॥१११॥

संसारिषु हि देवेषु—लोकपालादिषु भक्तिः—सेवा, तत्कायगामिनां—संसारिदेवकायगामिनां, तदतीते पुन—संसारातीते तु, तत्त्वे तदतीतार्थयायिनां—संसारातीतमार्गयायिनां योगिनां भक्तिः ॥१११॥ अनयोर्विशेषमाह—

चित्रा चाद्येषु तद्रागतदन्यद्वेषसङ्गता ।
अचित्रा चरमे त्वेषा शमसाराखिलैव हि ॥११२॥

चित्रा च-नानाप्रकारा च आद्येषु-सांसारिकेषु देवेषु तद्रागतदन्यद्वेषसङ्गता—स्वाभीष्टदेवतारागाऽनभीष्टद्वेषसंयुक्ता, मोहगर्भत्वात् । अचित्रा एकाकारा, चरमे तदतीते तु तत्त्वे, एषा भक्तिः, सा च शमसारा शमप्रधाना, अखिलैव हि तथासंमोहाभावादिति ॥११२॥ अत्रैव हेतुमाह—

संसारिणां हि देवानां यस्माच्चित्राण्यनेकधा ।
स्थित्यैश्वर्यप्रभावाद्यैः स्थानानि प्रतिशासनम् ॥११३॥

संसारिणां हि देवानां- लोकपालादीनां यस्माच्चित्राण्यनेकाकाराणि अनेकधाऽनेकैः प्रकारैः । कै कानीत्याह स्थित्यैश्वर्यप्रभावाद्यैः आदिशब्दात्सहजरूपादिपरिग्रहः, स्थानानि—विमानादीनि प्रतिशासनं—शासनं प्रति ब्रह्माण्डत्रैविध्यानुभेदात् ॥११३॥ यस्मादेवम्—

तस्मात्तत्साधनोपायो नियमाच्चित्र एव हि ।
न भिन्ननगराणां स्यादेकं वर्त्म कदाचन ॥११४॥

तस्मात्कारणात् तत्साधनोपायः संसारिदेवस्थानसाधनोपायो नियमाच्चित्र एव हि भवति । इदमेव वस्तु लोकप्रसिद्धोदाहरणद्वारेणाह—न भिन्ननगराणां स्याद्-भवेत् एकं वर्त्म कदाचन तथा तद्भेदानुपपत्तेरिति ॥११४॥ तथा—

इष्टापूर्तानि कर्माणि लोके चित्राभिसन्धितः ।
नानाफलानि सर्वाणि द्रष्टव्यानि विचक्षणैः ॥११५॥

इष्टापूर्तानि कर्माणि—वक्ष्यमाणलक्षणानि लोके प्राणिगणे चित्राभिसन्धित

कारणात् किमित्याह नानाफलानि—चित्रफलानीति योऽर्थः, सर्वाणि द्रष्टव्यानि हेतुभेदात्, कैरित्याह विचक्षणैः—विद्वद्भिरिति ॥११५॥ इष्टापूर्तस्वरूपमाह—

ऋत्विग्भिर्मन्त्रसंस्कारैर्ब्राह्मणानां समक्षतः ।
अन्तर्वेद्यां हि यद्दत्तमिष्टं तदभिधीयते ॥११६॥

ऋत्विग्भिर्यज्ञाधिकृतैः मन्त्रसंस्कारैः करणभूतैः 'ब्राह्मणानां समक्षत' तदन्येषां, अन्तर्वेद्यां हि यद्दत्तं हिरण्यादि, इष्टं तदभिधियते विशेषलक्षणयोगात् ॥११६॥ तथा—

वापीकूपतडागानि, देवतायतनानि च ।
अन्नप्रदानमेतत्तु, पूर्तं तत्त्वविदो विदुः ॥११७॥

वापीकूपतडागानि—लोकप्रसिद्धान्येव, देवतायतनानि च—वसतिकादीनि. तथा अन्नप्रदानं लौकिकमेव, एतत्त्वेवम्भूतं, किमित्याह पूर्तं तत्त्वविदो विदुः —इति पूर्वापरिभावया तत्त्वविदो विदन्ति ॥११७॥ आन्तरं हेतुमधिकृत्याह—

अभिसन्धेः फलं भिन्नमनुष्ठाने समेऽपि हि ।
परमोऽतः स एवेह वारीव कृषिकर्मणि ॥११८॥

अभिसन्धेस्तथाविधाशयलक्षणात् किमित्याह फलं भिन्नं—संसारिदेवस्थानादि अनुष्ठाने समेऽपि हि इष्टादौ । परमः—प्रधानः, अतः—कारणात् स एवा—ऽभिसन्धिरेव इह—फलसिद्धौ किंवदित्याह वारीव कृषिकर्मणि इति दृष्टान्तः परमो—लोकरूढ्या ॥११८॥ अभिसन्धिभेदनिबन्धनान्याह—

रागादिभिरयं चेह, भिद्यतेऽनेकधा नृणाम् ।
नानाफलोपभोक्तॄणां, तथाबुद्ध्यादिभेदतः ॥११९॥

रागादिभिर्दोषैः अयं चाभिसन्धिः इह—लोके भिद्यतेऽनेकधा नृणां तन्मृदुमध्याधिमात्रभेदेन किंविशिष्टानामित्याह—नानाफलोपभोक्तॄणां तथाबुद्ध्यादिभेदतः—वक्ष्यमाणाद्भिद्यतेऽभिसन्धिरिति ॥११९॥ एतमेवाह—

बुद्धिर्ज्ञानमसंमोहस्त्रिविधो बोध इष्यते ।
तद्भेदात्सर्वकर्माणि, भिद्यन्ते सर्वदेहिनाम् ॥१२०॥

बुद्धिर्वक्ष्यमाणलक्षणा ज्ञानमप्येवमेव, असंमोहश्चैवं, त्रिविधो बोध इष्यते शास्त्रेषु । तद्भेदाद् बुद्धयादिभेदात्, सर्वकर्माणीष्टादीनि भिद्यन्ते सर्वदेहिनां, तद्धेतुभेदात्फलभेद इति कृत्वा ॥१२०॥ तत्र—

इन्द्रियार्थाश्रया बुद्धिर्ज्ञानं त्वागमपूर्वकम् ।
सदनुष्ठानवच्चैतदसमोहोऽभिधीयते ॥१२१॥

इन्द्रियार्थाश्रया बुद्धिस्तीर्थयात्रकदर्शने तद्गमनबुद्धिवत् । ज्ञानं त्वागमपूर्वकं तीर्थयात्राविधिविज्ञानवत्, सदनुष्ठानवच्चैतज्ज्ञानम् किमित्याह असमोहोऽभिधियते बोधराज इति ॥१२१॥

एवमेतेषां लक्षणे व्यवस्थिते सति लोकसिद्धमुदाहरणमाह—

रत्नोपलम्भतज्ज्ञानतत्प्राप्त्यादि यथाक्रमं ।
इहोदाहरणं साधु,ज्ञेयं बुद्धयादिसिद्धये ॥१२२॥

'रत्नोपलम्भ' सामान्येनेन्द्रियार्थाश्रया बुद्धिः, 'तज्ज्ञानं' त्वागमपूर्वकं रत्नज्ञानं, 'तत्प्राप्त्यादि' त्वसमोह, बोधगर्भत्वादस्य यथाक्रमम् इह-बुद्धयादौ उदाहरणं साधु, अभिप्रेतार्थसाधकत्वात्, अत एवाह ज्ञेयं बुद्धयादिसिद्धये बुद्धिज्ञानाऽसंमोहसिद्धयर्थमिति ॥१२२॥ सदनुष्ठानलक्षणमाह—

आदरः करणे प्रीतिरविघ्नः सम्पदागम ।
जिज्ञासा तन्निसेवा च, सदनुष्ठानलक्षणम् ॥१२३॥

आदरो-यत्नातिशय इष्टादौ, करणे प्रीतिरभिष्वङ्गात्मिका । अविघ्नस्तत्करण एवाहष्टसामर्थ्यात् सम्पदागमः, तत एव शुभभावपुण्यसिद्धेः, जिज्ञासेष्टादिगोचरैव, तन्निसेवा च इष्टोदिता सेवा, चशब्दात्तदनुग्रहग्रहः । एतत्सदनुष्ठानलक्षणं, सानुबन्धमाख्यादस्य ॥१२३॥ तत्र—

बुद्धिपूर्वाणि कर्माणि, सर्वाण्येवेह देहिनाम् ।
ससारफलदान्येव, विपाकविरसत्वतः ॥१२४॥

बुद्धिपूर्वाणि कर्माणि सर्वाण्येव सामान्येन इह-लोके, देहिनां-प्राणिनाम् किमित्याह संसारफलदान्येव असाध्यपूर्वकत्वात्, तथा चाह विपाकविरसत्वतः इति-तेषां नियोगन एव विपाकविरसत्वादिति ॥१२४॥

ज्ञानपूर्वाणि तान्येव, मुक्त्यङ्गं कुलयोगिनाम् ।
श्रुतशक्तिसमावेशादनुबन्धफलत्वत ॥१२५॥

ज्ञानपूर्वाणि–यथोदितज्ञाननिबन्धनानि तान्येव–कर्माणि किमित्याह मुक्त्यङ्गं भवन्ति कुलयोगिनां–वक्ष्यमाणलक्षणानाम् । कुलयोगिग्रहणमन्याऽसम्भवज्ञापनार्थम्, कुत इत्याह श्रुतशक्तिसमावेशात् हेतोः, अमृतशक्तिकल्पेयं, नैतदभावे मुख्यं कुलयोगित्वम् । अत एवाह 'अनुबन्धफलत्वतः' मुक्त्यङ्गत्वसिद्धेः, तात्त्विकावनुबन्धस्यैवम्भूतत्वादिति ॥१२५॥

असम्मोहसमुत्थानि, त्वेकान्तपरिशुद्धितः ।
निर्वाणफलदान्याशु, भवातीतार्थयायिनाम् ॥१२६॥

असंमोहसमुत्थानि–पुनर्यथोदितासंमोहनिबन्धनानि तु एकान्तपरिशुद्धित.–कारणात्, परिपाकवशेन किमित्याह निर्वाणफलदान्याशु–शीघ्रं तान्येव कर्माणि केषामित्याह भवातीतार्थयायिनां–सम्यक्परतत्त्ववेदिनामित्यर्थः ॥१२६॥ एतेषामेव लक्षणमाह—

प्राकृतेष्विह भावेषु, येषा चेतो निरुत्सुकम् ।
भवभोगविरक्तास्ते, भवातीतार्थयायिनः ॥१२७॥

प्राकृतेष्विह भावेषु–शब्दादिषु बुद्धिपर्यवसानेषु, येषां चेतो निरुत्सुकं–निःसङ्गतासमावेशात, भवभोगविरक्तास्ते-एवम्भूता जीवा मुक्तकल्पा 'भवातीतार्थयायिन' उच्यन्ते, भवचित्ताऽसंस्पर्शादिति ॥१२७॥

एक एव तु मार्गोऽपि, तेषा शमपरायण. ।
अवस्थाभेदभेदेऽपि, जलधौ तीरमार्गवत् ॥१२८॥

एक एव तु मार्गोऽपि चित्तविशुद्धिलक्षण । तेषां भवातीतार्थयायिनां शमपरायण.–शमनिष्ठ अवस्थाभेदभेदेऽपि–गुणस्थानकभेदापेक्षया जलधौ तीरमार्गवदिति निदर्शनम् । अवस्थाभेदश्चेह तद्दूरासन्नतादिभेदेन ॥१२८॥

परतत्त्वाभिधित्सयाऽऽह—

संसारातीततत्त्वं तु, पर निर्वाणसज्ञितम् ।
तद्ध्येकमेव नियमाच्छब्दभेदेऽपि तत्त्वत ॥१२९॥

ससारातीततत्त्वं त्विति ससारातीतं पुनस्तत्त्वम् किमित्याह पर-प्रधानं निर्वाणसंज्ञा संजाताऽस्येति कृत्वा, तद्‌प्येकमेव सामान्येन, नियमात् नियमेन, शब्दभेदेऽपि वक्ष्यमाणलक्षणे सति, तत्त्वतः-परमार्थेन ॥१२९॥ एतदेवाह—

सदाशिवः पर ब्रह्म, सिद्धात्मा तथातेति च ।
शब्दैस्तदुच्यतेऽन्वर्थादेकमेवैवमादिभि ॥१३०॥

सदाशिव इति सर्वकालं शिवो न कदाचिदप्यशिव, त्रिकालपरिशुद्ध सर्वाशिवाऽभावात् पर-प्रधान 'ब्रह्म-'तथा बृहत्त्वबृंहकत्वाभ्यां सद्भावालम्बनत्वात्। सिद्धात्मा-कृतकृत्यात्मा निष्ठितार्थ इत्यर्थ.। तथातेति च-आकालं तथाभावात् । यथोक्तम्-"उपादाननिमित्ताभ्यामधिकारित्वता ध्रुवा। सर्वकालं तथाभावात्तथातेत्यभिधीयते ॥१॥ विसंयोगात्मिका चेय त्रिदु ख-परिवर्जिता। भूतकोटि परात्यन्त भूतार्थफलदेति च ॥२॥" [ ] इत्यादिशब्दैस्तन्निर्वाणमुच्यते, अन्वर्थादन्वर्थेनोक्तनीत्या एकमेव सत् एवमादिभिरिति ॥१३०॥ कथमेवे(वमि)त्याह—

तल्लक्षणाविसवादान्निराबाधमनामयम् ।
निष्क्रियं च पर तत्त्वं, यतो जन्माद्ययोगतः ॥१३१॥

तल्लक्षणाऽविसंवादादिति-निर्वाणलक्षणाविसंवादात्। एनमेवाह निराबाधं-निर्गतमाबाधाभ्य, अनामय-अविद्यमानद्रव्यभावरोगम् निष्क्रियं च कर्तव्याभावान्निबन्धनाभावेन परं तत्त्वमेवम्भूतं यतो-यस्मात्, जन्माद्ययोगतो-जन्मजरामरणाऽयोगेन ॥१३१॥ ऐदम्पर्यमाह—

ज्ञाते निर्वाणत वेऽस्मिन्नसमोहेन तत्त्वतः ।
प्रेक्षावता न तद्भक्तौ, विवाद उपपद्यते ॥१३२॥

ज्ञाते-परिच्छिन्ने, निर्वाणतत्त्वेऽस्मिन्नेवम्भूते असंमोहेन-बोधेन, तत्त्वतः-परमार्थत. किमित्याह प्रेक्षावता-बुद्धिमतां न तद्भक्तौ-न निर्वाणतत्त्वसेवायाम किमित्याह 'विवाद उपपद्यते' तत्तत्त्वज्ञानभेदाभावात् (तत्तत्त्वज्ञानाभेदात्) ऽन्यथा प्रेक्षावत्त्वविरोधादिति ॥१३२॥

सर्वज्ञपूर्वकं चैतन्नियमादेव यत्स्थितम् ।
आसन्नोयमृजुर्मार्गस्तद्भेदस्तत्कथं भवेत् ॥१३३॥

सर्वज्ञपूर्वकं चैतदधिकृततत्त्वं निर्वाणाख्यं नियमादेव यत्स्थितमसर्वज्ञस्य निर्वाणानुपपत्तेः, आसन्नोऽयं निर्वाणस्य सर्वज्ञलक्षण ऋजुरवक्रो, मार्गः-पन्था । तद्भेदः—सर्वज्ञभेदो मतभेदलक्षण. तत्तस्मात् कथं भवेन्नैव भवतीति ॥१३३॥

देशनाभेद. कथमित्याशङ्क्याह—

चित्रा तु देशनैतेषां, स्याद्विनेयानुगुण्यतः ।
यस्मादेते महात्मानो, भवव्याधिभिषग्वराः ॥१३४॥

चित्रा तु—नानाप्रकारा पुन, देशना "नित्य आत्मा, अनित्य इति च" इत्यादिरूपा एतेषां—सर्वज्ञाना कपिलसुगतादीनां, स्याद्-भवेत् विनेयानुगुण्यत.-तथाविधशिष्यानुगुण्येन कालान्तरापायभीरूनधिकृत्योपसर्जनीकृतपर्याया द्रव्यप्रधाना नित्यदेशना, भोगास्थावतस्त्वधिकृत्योपसर्जनीकृतद्रव्या पर्यायप्रधाना अनित्यदेशना । न तु तेऽन्वयव्यतिरेकवद्वस्तुवेदिनो न भवन्ति, सर्वज्ञत्वानुपपत्ते. । एवंदेशना तु तथागुणसम्पादनेनाऽदुष्टैवेत्याह 'यस्मादेते महात्मान' सर्वज्ञाः किमित्याह भवव्याधिभिषग्वरा—संसारव्याधिवैद्यप्रधानाः ॥१३४॥

अतः किमित्याह—

यस्य येन प्रकारेण, बीजाधानादिसम्भवः ।
सानुबन्धो भवत्येते, तथा तस्य जगुस्ततः ॥१३५॥

यस्य—प्राणिनो, येन प्रकारेण—नित्यदेशनादिलक्षणेन, बीजाधानादिसम्भवस्तथाभावोद्वेगादिभावेन सानुबन्धो भवति तथातथोत्तरगुणवृद्ध्या एते—सर्वज्ञाः तथा—तेन प्रकारेण तस्य जगु-र्गीतवन्त तत इति ॥१३५॥

परिहारान्तरमाह—

एकापि देशनैतेषां यद्वा श्रोतृविभेदतः ।
अचिन्त्यपुण्यसामर्थ्यात् तथा चित्राऽवभासते ॥१३६॥

एकापि देशना तन्मुखविनिर्गममधिकृत्य एतेषां—सर्वज्ञाना, यद्वा

श्रोतृविभेदतस्तथाभव्यत्वभेदेन अचिन्त्यपुण्यसामर्थ्यात्-परबोधाश्रयोपात्तकर्म-विपाकादित्यर्थ, तथा-नित्यादिप्रकारेण, चित्राऽवभासत इति ॥१३६॥

न च नैवमपि गुण इत्याह—

यथाभव्यं च सर्वेषामुपकारोऽपि तत्कृतः ।
जायतेऽवन्ध्यताप्येवमस्या· सर्वत्र सुस्थिता ॥१३७॥

यथाभव्य-भव्यसदृशं च सर्वेषामुपकारोऽपि-गुणोऽपि, तत्कृतो-देशना-निष्पन्न जायते-प्रादुर्भवति । अवन्ध्यताऽपि-अनिष्फलताऽपि एवमुक्तनीत्या अस्याः-देशनाया·, सर्वत्र सुस्थितेति ॥१३९॥ प्रकारान्तरमाह—

यद्वा तत्तन्नयापेक्षा, तत्तत्कालादियोगतः ।
ऋषिभ्यो देशना चित्रा, तन्मूलैषापि तत्त्वत ॥१३८॥

यद्वा तत्तन्नयापेक्षा-द्रव्यास्तिकादीनधिकृत्य तत्तत्कालादियोगात्-दुःषमादियोगात् ऋषिभ्यः-कपिलादिभ्य एव देशना चित्रेति । न चेयमपि निर्मूलेत्याह-तन्मूलैवापि-सर्वज्ञदेशनामूलैषापि तत्त्वतः-परमार्थेन, तत्प्रवचना-नुसारतस्तथाप्रवृत्तेरिति ॥१३८॥ प्रकृते ऋषिभ्यो योजनमाह—

तदभिप्रायमज्ञात्वा, न ततोऽर्वाग्दृशा सताम् ।
युज्यते तत्प्रतिक्षेपो, महानर्थकरः पर· ॥१३९॥

तदभिप्राय-सर्वज्ञाभिप्रायं अज्ञात्वा, न ततः-कारणात् अर्वाग्दृशां सता-प्रमातृणाम् किमित्याह युज्यते तत्प्रतिक्षेप·-सर्वज्ञप्रतिक्षेप, किंविशिष्ट इत्याह 'महानर्थकर पर·'-महानर्थकरणशीलः प्रधान इति ॥१३९॥

इहैव निदर्शनमाह—

निशानाथप्रतिक्षेपो, यथाऽन्धानामसङ्गतः ।
तद्भेदपरिकल्पश्च, तथैवार्वाग्दृशामयम् ॥१४०॥

निशानाथप्रतिक्षेपश्चन्द्रप्रतिक्षेप यथाऽन्धाना-चक्षुर्विकलानां, असङ्गतो नीत्या, तद्भेदपरिकल्पश्च-निशानाथभेदपरिकल्पश्च वक्रचतुरस्रत्वादिः, तथैवार्वाग्दृशां-छद्मस्थानाम् अयं-सर्वज्ञप्रतिक्षेप तद्भेदपरिकल्पश्चासङ्गत इति ॥१४०॥ किञ्च—

न युज्यते प्रतिक्षेपः, सामान्यस्यापि तत्सताम् ।
आर्यापवादस्तु पुनर्जिह्वाच्छेदाधिको मतः ॥१४१॥

न युज्यते प्रतिक्षेपो-निराकरणरूपः सामान्यस्यापि कस्यचित्पुरुषादेः तत्तस्मात् सता-मुनीनाम् आर्यापवादस्तु पुनः-सर्वज्ञपरिभव इत्यर्थः किमित्याह जिह्वाच्छेदाधिको मतः-तथाविधमत्यपायप्रभावेन ॥१४१॥ किञ्च,

कुदृष्ट्यादिवन्नो सन्तो, भाषन्ते प्रायशः क्वचित् ।
निश्चितं सारवच्चैव, किन्तु सत्त्वार्थकृत्सदा ॥१४२॥

कुदृष्ट्यादिवदसुन्दरमित्यादि, नो सन्तो-मुनयो, भाषन्ते क्वचित्, कथं तर्हि भाषन्त इत्याह निश्चितं-असन्दिग्धं, सारवच्चैव नापार्थकम् किन्तु सत्त्वार्थकृत्-परार्थकरणशीलं सदा भाषन्ते ॥१४२॥ उपसंहरन्नाह—

निश्चयोऽतीन्द्रियार्थस्य, योगिज्ञानादृते न च ।
अतोऽप्यत्रान्धकल्पानां, विवादेन न किञ्चन ॥१४३॥

निश्चयोऽतीन्द्रियार्थस्य-सर्वज्ञादेः योगिज्ञानादृते न च, तत एव तत्सिद्धेः, अतोऽपि कारणाद् अत्र सर्वज्ञाधिकारे, अन्धकल्पानां-विशेषतस्तदतत्त्वदर्शिनां, विवादेन न किञ्चन सच्चित्तनाशफलेन ॥१४३॥

न चानुमानविषय एषोऽर्थस्तत्त्वतो मतः ॥
न चातो निश्चयः सम्यगन्यत्राप्याह धीधनः ॥१४४॥

न चानुमानविषयो-न च युक्तिगोचर एषोऽर्थः-सर्वज्ञविशेषलक्षणः तत्त्वतो मतः-परमार्थेनेष्टः (र्थेन दृष्ट) न चातोऽनुमानात् निश्चयः सम्यगन्यत्रापि सामान्यार्थे । आह धीधनः-स भर्तृहरिः ॥१४४॥ किमाहेत्याह—

यत्नेनानुमितोऽप्यर्थः, कुशलैरनुमातृभिः ॥
अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥१४५॥

यत्नेनानुमितोऽप्यर्थोऽन्वयाद्यनुसारेण, कुशलैरनुमातृभिरन्वयादिज्ञैः, अभियुक्ततरैरन्वयादिज्ञैरेव अन्यथैवोपपाद्यते-तथाऽसिद्ध्यादिप्रकारेण ॥१४५॥

अभ्युच्चयमाह—

ज्ञायेरन् हेतुवादेन, पदार्था यद्यतीन्द्रियाः ॥
कालेनैतावता प्राज्ञै, कृत स्यात्तेषु निश्चयः ॥१४६॥

ज्ञायेरन् हेतुवादेनानुमानवादेन, पदार्था यद्यतीन्द्रियाः सर्वज्ञादय. कालेनैतावता प्राज्ञैस्तार्किकै., कृत. स्यात्तेषु निश्चयोऽवगम इति ॥१४६॥

न चैतदेवं यत्तस्माच्छुष्कतर्कग्रहो महान् ॥
मिथ्याभिमानहेतुत्वात्त्याज्य एव मुमुक्षुभिः ॥१४७॥

न चैतदेवं यद्येन कारणेन तस्माच्छुष्कतर्कग्रहो महानतिरौद्रः मिथ्याभिमानहेतुत्वात्त्याज्य एव मुमुक्षुभिर्मोक्तुमिच्छुभिः ॥१४७॥ किञ्च—

ग्रहः सर्वत्र तत्त्वेन, मुमुक्षूणामसङ्गत. ।
मुक्तौ धर्मा अपि प्रायस्त्यक्तव्याः किमनेन तत् ॥१४८॥

ग्रह. सर्वत्र-वस्तुनि, तत्त्वेन-परमार्थेन, मुमुक्षूणामसङ्गतोऽयुक्तः, कुत इत्याह मुक्तौ धर्मा अपि प्रायस्त्यक्तव्या –प्रायोग्रहणं क्षायिकधर्मव्यवच्छेदार्थम् किमनेन ग्रहेण तत् ? न किञ्चिदित्यर्थ ॥१४८॥ यत एवम्—

तदत्र महता वर्त्म, समाश्रित्य विचक्षणैः ॥
वर्तितव्यं यथान्यायं, तदतिक्रमवर्जितै. ॥१४९॥

तदत्र व्यतिकरे, महता वर्त्म समाश्रित्याङ्गीकृत्य, विचक्षणैः–पण्डितै., वर्तितव्यं यथान्याय-न्यायसदृशं, तदतिक्रमवर्जितैर्महद्वर्त्मातिचाररहितै. ॥१४९॥ एतदेवाह—

परपीडेह सूक्ष्मापि, वर्जनीया प्रयत्नतः ॥
तद्वत्तदुपकारेऽपि, यतितव्यं सदैव हि ॥१५०॥

परपीडा–परबाधा इह-लोके, सूक्ष्माप्यास्तां महतीति, किमित्याह वर्जनीया–परित्यक्तव्या, प्रयत्नत. सूक्ष्माभोगेन तद्वत्-प्रयत्नत एव तदुपकारेऽपि-परोपकारेऽपि, यतितव्यमनुष्टानद्वारेण, सदैव हीति ॥१५०॥ तथा—

गुरवो देवता विप्रा, यतयश्च तपोधना ।
पूजनीया महात्मानः, सुप्रयत्नेन चेतसा ॥१५१॥

गुरवो–मातापितृप्रमुखा', देवता सामान्येनैव, विप्राः–द्विजा', यतयश्च-

प्रव्रजिताश्च, तपोधना. तद्वन्त', पूजनीया महात्मान. सर्वे एवैते यथार्हम् । कथमित्याह सुप्रयत्नेन चेतसा आज्ञाप्रधानेनेत्यर्थः ॥१५१॥ किञ्च—

पापवत्स्वपि चात्यन्तं, स्वकर्मनिहतेष्वलम् ।
अनुकम्पैव सत्त्वेषु न्याय्या धर्मोऽयमुत्तम ॥१५२॥

पापवत्स्वपि चात्यन्तं, लुब्धकादिषु, स्वकर्मनिहतेष्वलमत्यर्थम्, अनुकम्पैव सत्त्वेषु न्याय्या न मत्सरो, धर्मोऽयमुत्तम. कारणे कार्योपचारादिति ॥१५२॥ उपसंहरन्नाह—

कृतमत्र प्रसङ्गेन, प्रकृतं प्रस्तुमोऽधुना ।
तत्पुनः पञ्चमी तावद्योगदृष्टिर्महोदया ॥१५३॥

कृतं—पर्याप्तं अत्र—व्यतिकरे प्रसङ्गेन, प्रकृतं प्रस्तुमोऽधुना—साम्प्रतं, तत्पुन. प्रकृतं पञ्चमी तावद्योगदृष्टिः स्थिराख्या किंविशिष्टेत्याह महोदया-निर्वाणपरमफलेत्यर्थ. ॥१५३॥

एवं सप्रपञ्चं चतुर्थीं दृष्टिमभिधाय पञ्चमीमभिधातुमाह—

स्थिरायां दर्शनं नित्यं, प्रत्याहारवदेव च ।
कृत्यमभ्रान्तमनघं सूक्ष्मबोधसमन्वितम् ॥१५४॥

स्थिरायां दृष्टौ, दर्शनं—बोधलक्षणं, नित्यमप्रतिपाति निरतिचारायाम्, सातिचारायां तु प्रक्षीणनयनपटलोपद्रवस्य तदुक्तोपायानवबोधकल्पमनित्यमपि भवति तथातिचारभावात् । रत्नप्रभायामपि धूल्यादेरुपद्रव' प्रत्याहारवदेव च "स्वविषयाऽसम्प्रयोगे स्वचित्तस्वरूपानुकारी चेन्द्रियाणां प्रत्याहारः" तद्वदेतद्दर्शन, कृत्यं—वन्दनादि, अभ्रान्तं क्रममधिकृत्य । अत एव, अनघमन-तिचारत्वात् । एतदेव विशेष्यते सूक्ष्मबोधसमन्वितं-ग्रन्थिभेदाद्वेद्यसंवेद्य-पदोपपत्तेरिति ॥१५४॥

बालधूलीगृहक्रीडा तुल्याऽस्या भाति धीमताम् ।
तमोग्रन्थिविभेदेन, भवचेष्टाखिलैव हि ॥१५५॥

बालधूलीगृहक्रीडातुल्या—प्रकृत्यसुन्दरत्वाऽस्थिरत्वाभ्यां, अस्या-स्थिरायां दृष्टौ, भाति धीमता—पुंसां, तमोग्रन्थिविभेदेन हेतुना, भवचेष्टाखिलैव हि

चक्रवर्त्यादिचेष्टारूपापि प्रकृत्यसुन्दरत्वादस्थिरत्वाच्च ॥१५५॥

मायामरीचिगन्धर्वनगरस्वप्नसन्निभान् ।
बाह्यान् पश्यति तत्त्वेन, भावान् श्रुतविवेकतः ॥१५६॥

मायामरीचयो–मृगतृष्णिका गन्धर्वनगर–हरिश्चन्द्रपुरादि स्वप्नः प्रतीत एव, एतत्सन्निभान्–एतदाकारान्, बाह्यान्–देहगृहादीन्, पश्यति तत्त्वेन परमार्थेन, भावान्–पदार्थान् । कुत इत्याह श्रुतविवेकत.–सम्यक्परिणतेन श्रुतज्ञानेन ॥१५६॥

अबाह्यं केवलं ज्योतिर्निराबाधमनामयम् ।
यदत्र तत्पर तत्त्वं, शेष पुनरुपप्लवः ॥१५७॥

अबाह्यमान्तर केवलमेक ज्योतिर्ज्ञान, अनाबाधममूर्ततया पीडारहितं, अनामयमरोगम् अत एव यदत्र–लोके, तत्पर तत्त्वं वर्तते, सदा तथाभावात् । शेष' पुनरुपप्लवस्तथास्वरूपेण भावादिति ॥१५७॥

एवं विवेकिनो धीरा , प्रत्याहारपरास्तथा ।
धर्मबाधापरित्यागयत्नवन्तश्च तत्त्वत ॥१५८॥

एवमुक्तनीत्या, विवेकिन एते धीरा अचपला., 'प्रत्याहारपराः'-उक्तलक्षण-प्रत्याहारप्रधाना. तथा–तेन प्रकारेण धर्मबाधापरित्यागयत्नवन्तश्च–तथान्त.-परिशुद्धेः, तत्त्वत.- परमार्थेन, एते हि भिन्नग्रन्थित्वादुत्तमश्रुतप्रधाना इत्येवमालोचयन्ति ॥१५८॥

न ह्यलक्ष्मीसखी लक्ष्मीर्यथानन्दाय धीमताम् ।
तथा पापसखा लोके, देहिना भोगविस्तरः ॥१५९॥

न हि–नैव, अलक्ष्मीसखी लक्ष्मीस्तयोभयपरिभोगेन यथानन्दाय–आनन्दार्थं धीमतां–बुद्धिमता तथा पापसखा लोके तदविनाभावेन, देहिनां भोगविस्तरो नानन्दाय, "नानुपहत्य भूतानि भोग. संभवति, भूतोपघाताच्च पापमिति भावना" ॥१५९॥ धर्मभोग' सुन्दर इत्यप्याशङ्कापोहायाह—

धर्मादपि भवन् भोग प्रायोऽनर्थाय देहिनाम् ।
चन्दनादपि सम्भूतो दहत्येव हुताशन. ॥१६०॥

धर्मादपि भवन् भोगो—देवलोकादौ, प्रायो—बाहुल्येन, अनर्थाय देहिनां-तथा प्रमादविधानात् । प्रायोग्रहणं शुद्धधर्माक्षेपिभोगनिरासार्थं, तस्य प्रमादजीवत्वायोगात्, अत्यन्तानवद्यतीर्थकरादिफलशुद्धेः पुण्यसिद्धयादावागमाभिनिवेशाद्धर्मसारचित्तोपपत्तेरिति । सामान्यतो दृष्टान्तमाह—चन्दनादपि सम्भूत तथा शैत्यप्रकृतेः किमित्याह दहत्येव हुताशनः तथास्वभावत्वात् । प्राय एतदेवं, न दहत्यपि कश्चित्सत्यमन्त्राभिसंस्कृताद्दाहाऽसिद्धेः । सकललोकसिद्धमेतदिति ॥१६०॥

भोगात्तदिच्छाविरतिः स्कन्धभारापनुत्तये ।
स्कन्धान्तरसमारोपस्तत्संस्कारविधानतः ॥१६१॥

भोगात्सकाशात्, तदिच्छाविरतिर्भोगेच्छाविरतिस्तात्कालिकी । किमित्याह स्कन्धभारापनुत्तये—स्कन्धभारापनुत्त्यर्थं स्कन्धान्तरसमारोपः वर्तते । कुत इत्याह तत्संस्कारविधानतः— तथाकर्मबन्धेनानिष्टभोगसंस्कारविधानात्तत्त्वतस्तदिच्छाऽनिवृत्तेरिति । उक्ता पञ्चमी दृष्टिः ।

सत्यायस्थामपरैरपि योगाचार्यरलौल्यादयो गुणाः प्रोच्यन्ते । यथोक्तम्—
अलौल्यमारोग्यमनिष्ठुरत्वं । गन्धः शुभो मूत्रपुरीषमल्पम् ।
कान्तिः प्रसादः स्वरसौम्यता च । योगप्रवृत्तेः प्रथमं हि चिह्नम् ॥१॥
मैत्र्यादियुक्तं विषयेष्वचेतः प्रभाववद्धैर्यसमन्वितं च ।
द्वन्द्वैरधृष्यत्वमभीष्टलाभः जनप्रियत्वं च तथा परं स्यात् ॥२॥
दोषव्यपायः परमा च तृप्तिरौचित्ययोगः समता च गुर्वी ।
वैरादिनाशोऽथ ऋतम्भरा धीर्निष्पन्नयोगस्य तु चिह्नमेतत् ॥३॥
इत्यादि इहाप्येतदकृत्रिमं गुणजातम् अत आरभ्य विज्ञेयम् ॥१६१॥

तथा च षष्ठीं दृष्टिमभिधातुमाह—

कान्तायामेतदन्येषां प्रीतये धारणा परा ।
अतोऽत्र नान्यमुन्नित्यं मीमांसास्ति हितोदया ॥१६२॥

कान्तायां—दृष्टौ एतदनन्तरोदितं नित्यदर्शनादि अन्येषां प्रीतये भवति, न तु द्वेषाय । तथा धारणा परा-प्रधाना चित्तस्य देशबन्धलक्षणा । यथोक्तम्—

"देशबन्धश्चित्तस्य धारणा" (३-१ पा०)। अतो-धारणातः अत्र-दृष्टौ, नान्यमुद्-नान्यत्र हर्षः, तदा तत्त्वप्रतिभासाऽयोगात्। तथा नित्यं-सर्वकालं, मीमांसास्ति-सद्विचारात्मिका। अत एवाह 'हितोदया' सम्यग्ज्ञानफलत्वेन ॥१६२॥ अमुमेवार्थं स्पष्टयन्नाह—

अस्या तु धर्ममाहात्म्यात्समाचारविशुद्धितः।
प्रियो भवति भूतानां धर्मैकाग्रमनास्तथा ॥१६३॥

अस्यामेव-दृष्टौ कान्तायां नियोगेन, धर्ममाहात्म्यात्कारणात्, समाचारविशुद्धितो हेतोः किमित्याह प्रियो भवति भूतानां-प्राणिना, धर्मैकाग्रमनास्तथा भवतीति ॥१६३॥ एतदेवाह—

श्रुतधर्मे मनो नित्यं कायस्त्वस्यान्यचेष्टिते।
अतस्त्वाक्षेपकज्ञानान्न भोगा भवहेतवः ॥१६४॥

श्रुतधर्मे-आगमे, मनो नित्यं तद्भावनोपपत्तेः, कायस्तु-काय एव अस्याधिकृतदृष्टिमतो अन्यचेष्टिते-सामान्ये, अतस्त्वत एव कारणात् आक्षेपकज्ञानात् सम्यगाक्षेपकज्ञानेन हेतुभूतेन, भोगाः-इन्द्रियार्थसम्बन्धाः भवहेतवः -संसारहेतवो न इति ॥१६४॥ अमुमेवार्थं दृष्टान्तमधिकृत्याह—

मायाम्भस्तत्त्वतः पश्यन्ननुद्विग्नस्ततो द्रुतम्।
तन्मध्येन प्रयात्येव यथा व्याघातवर्जितः ॥१६५॥

मायाम्भस्तत्त्वतः पश्यन्-मयाम्भस्त्वेनैव, अनुद्विग्नस्ततो-मायाम्भसः द्रुतं-शीघ्रं, तन्मध्येन-मायाम्भोमध्येन प्रयात्येव-न न प्रयाति, यथा इत्युदाहरणोपन्यासार्थः व्याघातवर्जितो-मायम्भसस्तत्त्वेन व्याघाताऽसमर्थत्वादिति ॥१६५॥

भोगान्स्वरूपतः पश्यंस्तथा मायोदकोपमान्।
भुञ्जानोऽपि ह्यसङ्गः सन् प्रयात्येव परं पदम् ॥१६६॥

भोगानिन्द्रियार्थसम्बन्धान्, स्वरूपतः पश्यन्समारोपमन्तरेण, तथा-तेनैव प्रकारेण मायोदकोपमानसारान्, भुञ्जानोऽपि हि कर्माक्षिप्तान्, असङ्गः सन् प्रयात्येव परं पदं, तथाऽनभिष्वङ्गतया परवशताभावात् ॥१६६॥

भोगतत्त्वस्य तु पुनर्न भवोदधिलङ्घनम्।
मायोदकदृढावेशस्तेन यातीह क पथा ॥१६७॥

भोगतत्त्वस्य तु–भोगपरमार्थस्य पुन, न भवोऽधिलङ्घनं–तथाबुद्धेस्तदुपायेऽप्रवृत्ते.। आह च, मायोदकदृढावेश· तथाविपर्यासात, तेन यातीह क. पथा–यत्र मायायामुदकबुद्धि ॥१६७॥

स तत्रैव भवोद्विग्नो यथा तिष्ठत्यसंशयम्।
मोक्षमार्गेऽपि हि तथा भोगजम्बालमोहितः ॥१६८॥

स–मायायामुदकदृढावेश, तत्रैव–पथि, भवोद्विग्न· सन् यथा–इत्युदाहरणोपन्यासार्थं, तिष्ठत्यसंशयं–तिष्ठत्येव जलबुद्धिसमावेशात्। मोक्षमार्गेऽपि हि ज्ञानादिलक्षणे तथा तिष्ठत्यसंशयं भोगजम्बालमोहितः–भोगनिबन्धनदेहादिप्रपञ्चमोहित इत्यर्थ ॥१६८॥

मीमासाभावतो नित्य न मोहोऽस्या यतो भवेत्।
अतस्तत्त्वसमावेशात्सदैव हि हितोदय· ॥१६९॥

मीमांसाभावतो -सद्विचारभावेन, नित्य–सर्वकालं, न मोहोऽस्या दृष्टौ, यतो भवेत अतस्तत्त्वसमावेशात्कारणात्, सदैव हितोदयोऽस्या दृष्टाविति ॥१६९॥ प्रतिपादिता षष्ठी दृष्टिः। साम्प्रतं सप्तम्युच्यते—

ध्यानप्रिया प्रभा प्रायो नास्या रुगत एव हि।
तत्त्वप्रतिपत्तियुता विशेषेण शमान्विता ॥१७०॥

एवं सत्प्रवृत्तिपदावहेति पिण्डार्थ ॥१७०॥

ध्यानजं सुखमस्या तु जितमन्मथसाधनम्।
विवेकबलनिर्जातं शमसारं सदैव हि ॥१७१॥

ध्यानजं सुखमस्या–त्वधिकृतदृष्टावेव किंविशिष्टमित्याह–जितमन्मथसाधन–श्युदस्तशब्दादिविषयम्, एतदेव विशेष्यते विवेकबलनिर्जातं–ज्ञानसामर्थ्योत्पन्नम्। अत एव शमसार सदैव हि विवेकस्य शमफलत्वादिति ॥१७१॥ किञ्च—

सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् ।
एतदुक्तं समासेन लक्षणं सुखदुःखयोः ॥१७२॥

सर्वं परवशं दुःखं—तल्लक्षणयोगात्, सर्वमात्मवशं सुखमत एव हेतोः । एतदुक्तं मुनिना समासेन—संक्षेपेण, लक्षणं—स्वरूपं, सुखदुःखयोरिति ॥१७२॥

पुण्यापेक्षमपि ह्येवं सुखं परवशं स्थितम् ।
ततश्च दुःखमेवैतत्तल्लक्षणनियोगतः ॥१७३॥

पुण्यापेक्षमपि ह्येवमुक्तनीत्या सुखं परवशं स्थितं—पुण्यस्य परत्वात् । ततश्च दुःखमेवैतत्तल्लक्षणनियोगात् । तदित्थं ध्यानजं तात्त्विकं सुखमपरायत्त्वात्कर्मवियोगमात्रजत्वादिति ॥१७३॥

ध्यानं च निर्मले बोधे सदैव हि महात्मनाम् ।
क्षीणप्रायमलं हेम सदा कल्याणमेव हि ॥१७४॥

ध्यानं च निर्मले बोधे—स्पष्टक्षयोपशमसमुत्थे सति किमित्याह सदैव हि महात्मनां—मुनीनाम्, एतदेव प्रतिवस्तूपमयाह क्षीणप्रायमलं हेम—स्वर्णं 'सदा कल्याणमेव हि' तथावस्थोपपत्तेः ॥१७४॥

सत्प्रवृत्तिपदं चेहाऽसङ्गानुष्ठानसंज्ञितम् ।
महापथप्रयाणं यदनागामिपदावहम् ॥१७५॥

सत्प्रवृत्तिपदं चेह—सत्त्वमार्गे किमित्याह 'असङ्गानुष्ठानसंज्ञितं' वर्तते तथास्वरसप्रवृत्तेः । महापथप्रयाणं यदसङ्गानुष्ठानम्, अनागामिपदावहं —नित्यपदप्रापकमित्यर्थः ॥१७५॥ असङ्गानुष्ठाननामान्याह—

प्रशान्तवाहितासंज्ञं विसभागपरिक्षयः ।
शिववर्त्म ध्रुवाध्वेति योगिभिर्गीयते ह्यदः ॥१७६॥

प्रशान्तवाहितासंज्ञं—सांख्यानां, विसभागपरिक्षयो—बौद्धानां, शिववर्त्म—शैवानां, ध्रुवाध्वा—महाव्रतिकानां, इत्येवं योगिभिर्गीयते ह्यदोऽसङ्गाऽनुष्ठानमिति ॥१७६॥

एतत्प्रसाधयत्याशु यद्योग्यस्या व्यवस्थितः ।
एतत्पदावहैषैव तत्तत्रैतद्विदा मता ॥१७७॥

एतदसङ्गानुष्ठानं, प्रसाधयत्याशु-शीघ्रं, यद्योगी अस्यां-दृष्टौ व्यवस्थितः सन्, एतत्पदावहैषैव दृष्टिः तत्तद्वेतद्विदां मतेष्टेति ॥१७७॥ उक्ता सप्तमी दृष्टिः। अधुनानन्तरोच्यते। तदाह—

समाधिनिष्ठा तु परा तदासङ्गविवर्जिता।
सात्मीकृतप्रवृत्तिश्च तदुत्तीर्णाशयेति च ॥१७८॥

समाधिनिष्ठा तु पराऽष्टमी दृष्टिः, "समाधिस्तु ध्यानविशेषः," फलमित्यन्ये। यथोक्तं "देशबन्धश्चित्तस्य धारणा" (३-१ पा०) "तत्र प्रत्ययैकतानता ध्यानं" (३-२ पा०) "तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः" (३-३ पा०) इति ॥ तदासङ्गविवर्जिता-समाध्यासङ्गविवर्जिता भूतप्रवृत्तिश्चैषा चन्दनगन्धन्यायेन। तदुत्तीर्णाशयेति चाऽसच्चित्ताऽभावेन ॥१७८॥

निराचारपदो ह्यस्यामतिचारविवर्जितः।
आरूढारोहणाभावगतिवत्त्वस्य चेष्टितम् ॥१७९॥

निराचारपदो हि-एव अस्यां दृष्टौ योगी भवति, प्रतिक्रमणाद्यभावात्, अतिचारविवर्जितस्तन्निबन्धनाभावेन। आरूढारोहणाभावगतिवत्त्वस्य-योगिनश्चेष्टितं भवति, आचारजेयकर्माभावात् निराचारपद इत्यर्थः ॥१७९॥

कथं भिक्षाटनाद्याचारोऽस्येत्याशङ्कापनोदायाह—

रत्नादिशिक्षादृग्भ्योऽन्या यथा दृक्तन्नियोजने।
तथाचारक्रियाप्यस्य सैवान्या फलभेदतः ॥१८०॥

रत्नादिशिक्षादृग्भ्यः सकाशात् अन्या-भिन्नैव यथा दृक्-तन्नियोजने शिक्षितस्य सतः। तथाचारक्रियाप्यस्य- योगिनः, सैव-भिक्षाटनादिलक्षणा अन्या भवति। कुत इत्याह फलभेदतः, प्राक् साम्परायिककर्मक्षयः फलं, इदानीं तु भवोपग्राहिकर्मक्षय इति ॥१८०॥

तन्नियोगान्महात्मेह कृतकृत्यो यथा भवेत्।
तथाऽयं धर्मसन्न्यासविनियोगान्महामुनिः ॥१८१॥

तन्नियोगाद्-रत्ननियोगात् महात्मेह-लोके कृतकृत्यो यथा भवेत्-

कश्चिद्रत्नवणिक् तथाऽयमधिकृतयोगो, धर्मसन्न्यासविनियोगात्सकाशात् महामुनिः कृतकृत्यो भवतीति ॥१८१॥ तत्र—

द्वितीयाऽपूर्वकरणे मुख्योऽयमुपजायते ।
केवलश्रीस्ततश्चास्य नि सपत्ना सदोदया ॥१८२॥

द्वितीयाऽपूर्वकरणे–श्रेणिवर्तिनि, मुख्योऽयं–धर्मसन्न्यासः उपजायते, उपचरितस्तु प्रमत्तसंयतादारभ्य, केवलश्रीस्ततश्च–धर्मसन्न्यासविनियोगात अस्य–योगिनो निःसपत्ना केवलश्री, सदोदया–प्रतिपाताभावेन ॥१८२॥

सिंहावलोकितनीत्याधिकृतवस्तुनिर्धारणायाह—

स्थितः शीतांशुवज्जीवः प्रकृत्या भावशुद्धया ।
चन्द्रिक वच्च विज्ञानं तदावरणमभ्रवत् ॥१८३॥

स्थितो–न स्थापनीयः, शीतांशुवच्चन्द्रवत, जीवः–आत्मा, प्रकृत्याऽऽत्मीयया, भावशुद्धया–तत्त्वशुद्धयेत्यर्थ ॥१८३॥ प्रकृतयोजनमाह—

घातिकर्माभ्रकल्पं तदुक्तयोगऽनिलाऽऽहतेः ।
यदाऽपैति तदा श्रीमान् जायते ज्ञानकेवली ॥१८४॥

घातिकर्म–ज्ञानावरणीयादि त[द्य]था ज्ञानावरणीय, दर्शनावरणीय, मोहनीयं, अन्तराय चेति । एतदभ्रकल्पं वर्तते तद् घातिकर्म उक्तयोगानिलाहते–अन्तरोदितयोगवायुघातादित्यर्थ यदापैति–श्रेणिपरिसमाप्तौ तदा श्रीमानसौ मुख्यविक्रमयोगेन जायते ज्ञानकेवली–सर्वज्ञ इत्यर्थः ॥१८४॥

अत एवाह—

क्षीणदोषोऽथ सर्वज्ञः सर्वलब्धिफलान्वितः ।
पर परार्थं सम्पाद्य ततो योगान्तमश्नुते ॥१८५॥

क्षीणदोष–सकलरागादिपरिक्षयेण अर्थात् तदैव सर्वज्ञो–निरावरणज्ञानभावेन सर्वज्ञ इत्यर्थ.। सर्वलब्धिफलान्वित–सर्वौत्सुक्यनिवृत्त्या पर परार्थं सम्पाद्य–यथाभव्यं सम्यक्त्वादिलक्षण ततो योगान्तमश्नुते–योगपर्यन्तमाप्नोति ॥१८५॥

तत्र द्रागेव भगवानयोगाद्योगसत्तमात् ।
भवव्याधिक्षयं कृत्वा निर्वाणं लभते परम् ॥१८६॥

तत्र-योगान्ते शैलेश्यवस्थायां, द्रागेव-शीघ्रमेव, ह्रस्वपञ्चाक्षरोद्गिरण-मात्रेण कालेन, भगवानसौ अयोगाद्-अव्यापारात्, योगसत्तमाद्-योगप्रधानात् शैलेशीयोगादित्यर्थः किमित्याह 'भवव्याधिक्षयं कृत्वा' सर्वप्रकारेण निर्वाणं लभते परं-भावनिर्वाणमित्यर्थः ॥१८६॥ तत्रायं कीदृश इत्याह—

व्याधिमुक्तः पुमान् लोके यादृशस्तादृशो ह्ययम् ।
नाभावो न च नो मुक्तो व्याधिनाऽव्याधितो न च ॥१८७॥

व्याधिमुक्तो-व्याधिपरिक्षीणः पुमान् यादृशो भवतीति तादृशो ह्ययं निर्वृतो, नाऽभाव-प्रध्यातदीपकल्पोपमो, 'न च नो मुक्तो व्याधिना' मुक्त एव भव्यत्वपरिक्षयेण, 'अव्याधितो न च'-पूर्वं तथा तद्भावादिति ॥१८७॥

अमुमेवार्थं स्पष्टयन्नाह—

भव एव महाव्याधिर्जन्ममृत्युविकारवान् ।
विचित्रमोहजननस्तीव्ररागादिवेदनः ॥१८८॥

भवः-संसार एव महाव्याधिः । किंविशिष्ट इत्याह-जन्ममृत्युविकार-वान्, जराद्युपलक्षणमेतत् । विचित्रमोहजननो मिथ्यात्वोदयभावेन, तीव्ररागा-दिवेदनः स्त्र्याद्यभिष्वङ्गभावेन ॥१८८॥

मुख्योऽयमात्मनोऽनादिचित्रकर्मनिदानजः ।
तथानुभवसिद्धत्वात्सर्वप्राणभृतामिति ॥१८९॥

मुख्यो-निरुपचरितो अयं-भवव्याधिः, आत्मनो-जीवस्य किम्भूत इत्याह अनादिचित्रकर्मनिदानजः-द्रव्यभावभेदभिन्नकर्मदलोत्पन्न इत्यर्थः । कुत इत्याह तथानुभवसिद्धत्वात्-जन्माद्यनुभावेन सर्वप्राणभृतामिति-तिर्यग्-स्पृभृतीनामपि ॥१८९॥

एतन्मुक्तश्च मुक्तोऽपि मुख्य एवोपपद्यते ।
जन्मादिदोषविगमात्तद्दोषात्वरूङ्गते ॥१९०॥

एतेन भवव्याधिना मुक्तश्च, मुक्तोऽपि—सिद्ध. 'मुख्य एवोपपद्यते' प्रवृत्तिनिमित्तभावात् । तथा चाह—जन्मादिदोषविगमात् कारणात् तददोषत्व-सङ्गतेस्तस्य दोषवतोऽदोषत्वप्राप्तेरिति ॥१९०॥ अमुमेवार्थं स्पष्टयन्नाह—

तत्स्वभावोपमर्देऽपि तत्तत्स्वाभाव्ययोगतः ।
तस्यैव हि तथाभावात्तददोषत्वसङ्गतिः ॥१९१॥

तस्यात्मनः स्वभावोपमर्देऽपि सति जन्मादिभावविगमेन तत्तत्स्वाभा-व्ययोगत.-तस्य तत्स्वाभाव्यं तेन योगात्, तथाहि—तस्येत्थम्भूत एव स्वभावो येन स एव तथा भवतीति ततश्च तस्यैव हि तथाभावाज्जन्मादित्यागतो जन्मा-द्यतीतत्वेन भावात् किमित्याह तददोषत्वसङ्गति.—दोषवत एवाऽदोषत्वप्राप्ति-रित्यर्थः ॥१९१॥ इत्थं चैतदङ्गीकर्तव्यमित्याह—

स्वभावोऽस्य स्व—भावो यन्निजा सत्तैव तत्त्वत ।
भावावधिरयं युक्तो नान्यथाऽतिप्रसङ्गतः ॥१९२॥

स्वभावोऽस्यात्मनः स्व—भावो यद्यस्मात्, किमुक्तं भवति—निजा सत्तैव 'तत्त्वत'—परमार्थेन भावावधिरयं युक्त.—स्वभावोऽनन्तरोदित. 'नान्यथा' युक्तः । कुत इत्याह अतिप्रसङ्गत इति ॥१९२॥ एनमेवाह—

अनन्तरक्षणाभूतिरात्मभूतेह यस्य तु ।
तयाऽविरोधान्नित्योऽसौ स्यादसत्त्वात् सदैव हि ॥१९३॥

अनन्तरक्षणाऽभूति—प्राक्पश्चात्क्षणयोरभूतिरित्यर्थ., आत्मभूतेह यस्य तु—वर्तमानस्य वादिनो वा तस्य दोषमाह-तया अनन्तरक्षणभूत्या अविरोधात् कारणाद्वर्तमानभावेन किमित्याह नित्योऽसौ वर्तमानः स्यात् तद्वत्सदा तद्भावादिति । पक्षान्तरमाह असत्त्वात् सदैव हि तया विरोधेन तद्ग्रस्तत्वादिति ॥१९३॥ परोक्तिमात्रपरिहारायाह—

स एव न भवत्येतदन्यथा भवतीतिवत् ।
विरुद्धं तन्नयादेव तदुत्पत्त्यादितस्तथा ॥ १९४॥

स एव—इति भावपरामर्श, न भवतीतिचाभावाभिधानं एतत्, किमित्याह 'अन्यथाभवतीतिवत्' इति निदर्शनम्, विरुद्धं—व्याहतम्,

तन्नयादेव, स हि स एवान्यथाभवतीत्युक्ते एवमाह-यदि स एव कथमन्यथा भवति, अन्यथा चेद्भवति कथं स इति । एतच्च स एव न भवतीत्यत्रापि समानमेव । तथा हि यदि स एव कथं न भवति, अभवत्वात् कथं स इति विरुद्धमेतत् । अभ्युच्चयमाह 'तदुत्पत्त्यादित.' इत्यभावोत्पत्त्यादेः, तथा -विरुद्धमिति ॥१९४॥ एतद्भावनायैवाह—

सतोऽसत्त्वे तदुत्पादस्ततो नाशोऽपि तस्य यत् ।
तन्नष्टस्य पुनर्भावः सदा नाशे न तत्स्थितिः ॥ १९५॥

सतो-भावस्य असत्त्वेऽभ्युपगम्यमाने "स एव न भवति" इति वचनात् किमित्याह तदुत्पादः-इत्यसत्त्वोत्पादः कादाचित्कत्वेन ततः -उत्पादात् नाशोऽपि तस्यासत्त्वस्य 'यदुत्पत्तिमत्तदनित्यं' इति कृत्वा यद्यस्मात् तत्तस्मात्, नष्टस्याऽसत्त्वस्य पुनर्भावस्तेनैव रूपेण सदसत्त्वविनाशान्यथानुपपत्तेः । अथ नाशो नाशात्मना भावात्प्राक्पश्चाच्चावस्थित एव-एतदाशङ्क्याह सदानाशे-अभ्युपगम्यमाने किमित्याह 'न तत्स्थिति.' विवक्षितक्षणेऽपि तन्नश्यति ॥१९५॥

स क्षणस्थितिधर्मा चेद् द्वितीयादिक्षणे स्थितौ ।
युज्यते ह्येतदप्यस्य तथा चोक्तानतिक्रमः ॥१९६॥

स-नाशः, क्षणस्थितिधर्मा चेद्भाव एव । एतदाशङ्क्याह द्वितीयादिक्षणे स्थितौ सत्याम् किमित्याह युज्यते ह्येतदपि-क्षणस्थितिधर्मकत्वं, अस्य-अधिकृतभावस्य । तथा चैव सति उक्तानतिक्रम. ॥१९६॥ कथमित्याह—

क्षणस्थितौ तदैवाऽस्य नाऽस्थितिर्युक्त्यसङ्गतेः ।
न पश्चादपि सेत्येवं सतोऽसत्त्वं व्यवस्थितम् ॥१९७॥

क्षणस्थितौ सत्यां तदैव विवक्षितक्षणे अस्य-विवक्षितभावस्यैव नाऽस्थितिः । कुत इत्याह युक्त्यसङ्गते. तदैवाऽस्थितिविरोधादिति युक्तिः । न पश्चादपि द्वितीयक्षणे साऽस्थितिर्न युक्त्यसङ्गतेरेव 'तदावस्थितौ तदस्थितिविरोधादिति' युक्तिः । इत्येवं सतोऽसत्त्वं व्यवस्थितम् । ततश्च 'सतोऽसत्त्वे' इत्याद्यनुवर्त्तते एवेति ॥१९७॥ नित्यपक्षमधिकृत्याह—

भवभावानिवृत्तावप्ययुक्ता मुक्तकल्पना।
एकान्तैकस्वभावस्य न ह्यवस्थाद्वयं क्वचित् ॥१९८॥

भवभावानिवृत्तावप्येकान्तनित्यतायाम् किमित्याह अयुक्ता मुक्तकल्पना आत्मन.। कथमयुक्तेत्याह एकान्तैकस्वभावस्य—अप्रच्युतानुत्पन्नस्थिरैकस्वभावतायाः, न हि यस्मात् अवस्थाद्वयं ससारिमुक्ताख्यं क्वचित्, एकान्तैकस्वभावत्वविरोधात् ॥१९८॥

तदभावे च ससारी मुक्तश्चेति निरर्थकम्।
तत्स्वभावोपमर्दोऽस्य नीत्या तात्त्विक इष्यताम् ॥१९९॥

तदभावे चाऽवस्थाद्वयाभावे च, संसारी—तिर्यगादिभाववान्, मुक्तो—भवप्रपञ्चोपरमादित्येतत् निरर्थकं—शब्दमात्रमेव च, अर्थायोगादिति। तत्तथा स्वभावोपमर्दस्तदन्तरेण तदन्तरापनयनलक्षणः अस्यात्मनः नीत्या—न्यायेन। किमित्याह तात्त्विक इष्यतां—पारमार्थिकोऽभ्युपगम्यतामिति ॥१९९॥

दिदृक्षाद्यात्मभूतं तन्मुख्यमस्या निवर्तते।
प्रधानादिनतेर्हेतुस्तदभावान्न तन्नति. ॥२००॥

दिदृक्षाऽविद्यामलभवाधिकारादि, आत्मभूतं सहजं वस्तुसत्। तत्तस्मात्, मुख्यमनुपचरितमेव, अस्यात्मनो निवर्तत इति। किम्भूतं तदित्याह प्रधानादिनते·—प्रधाननयादिपरिणते., हेतु—कारणम्। तदभावाद्दिदृक्षाद्यभावात्, न तन्नतिर्न प्रधानादिपरिणतिर्मुक्तात्मन इति ॥२००॥

अन्यथा स्यादियं नित्यमेषा च भव उच्यते।
एवं च भवनित्यत्वे कथं मुक्तस्य सम्भवः ॥२०१॥

इत्थं चैतदङ्गीकर्तव्य, अन्यथैवमनभ्युपगम्यमाने स्यादियं—प्रधानादिनतिः नित्यं—सदैव। तत किमित्याह एषा च—प्रधानादिनतिः, भव उच्यते—संसारोऽभिधीयते, एतन्नतौ तदात्मकमहदादिभावात्। एवं चोक्तनीत्या भवनित्यत्वे सति कथ मुक्तस्य सम्भवः? नैवेत्यर्थ. ॥२०१॥

अवस्था तत्त्वतो नो चेन्ननु तत्प्रत्ययः कथम्।
भ्रान्तोऽयं किमनेनेति मानमत्र न विद्यते ॥२०२॥

अवस्था तत्त्वतः-परमार्थेन, नो चेत्पूर्वापरभावेन तदाशङ्क्याह ननु तत्प्रत्ययः-अवस्थाप्रत्ययः कथं-निबन्धनाभावेन । स्यादेतत्—तद्भ्रान्तोऽयमवस्थाप्रत्ययः ततिकमनेनेत्येतदाशङ्क्याह—'मानमत्र' भ्रान्ततायां न विद्यते ॥२०२॥

योगिज्ञानं तु मानं चेत्तदवस्थान्तर तु तत् ।
ततः किं भ्रान्तमेतत्स्यादन्यथा सिद्धसाध्यता ॥२०३॥

योगिज्ञान तु—योगिज्ञानमेव प्रमाणं चेदत्र एतदाशङ्क्याह तदवस्थान्तर तु—योग्यवस्थान्तरमेव, तत्—योगिज्ञानम् । ततः किमित्येतदाशङ्क्याह भ्रान्तमेतत्स्यात्—योगिज्ञानं, अन्यथा अभ्रान्तत्वेऽस्य किमित्याह सिद्धसाध्यता —अवस्थाभेदोपपत्तेरिति ॥२०३॥ उक्तमानुषङ्गिकं, प्रकृतं प्रस्तुमः तच्च सिद्धस्वरूप व्याधिमुक्तः पुमान् लोके इत्याद्युपन्यासात्, तत्र—

व्याधितस्तदभावो वा तदन्यो वा यथैव हि ।
व्याधिमुक्तो न सन्नीत्या कदाचिदुपपद्यते ॥२०४॥

व्याधितः—सञ्जातव्याधिरेव, तदभावो वा, तदन्यो वा—व्याधितादन्यो वा तत्पुत्रादि, यथैव हि व्याधिमुक्तो न त्रयाणामेकोऽपि, सन्नीत्या—सन्न्यायेन, कदाचिदुपपद्यत इति दृष्टान्तः ॥२०४॥ दार्ष्टान्तिकयोजनमाह—

ससारी तदभावो वा तदन्यो वा तथैव हि ।
मुक्तोऽपि हन्त नो मुक्तो, मुख्यवृत्त्येति तद्विदः ॥२०५॥

संसारी—पुरुष तदभावो वा—पुरुषाभावमात्रमेव तदन्यो वैकान्तलक्षणः तथैव हि यथा दृष्टान्ते किमित्येत्याह 'मुक्तोऽपि हन्त नो मुक्तो' मुख्यवृत्त्या त्रयाणामपि तत्प्रवृत्तिनिमित्ताभावात्, इति तद्विद -मुक्तविद इत्थमभिदधतीति ॥२०५॥ कथ तर्हि मुक्तव्यवस्थेत्याह—

क्षीणव्याधिर्यथा लोके व्याधिमुक्त इति स्थितः ।
भवरोग्येव तु तथा मुक्तस्तन्त्रेषु तत्क्षयात् ॥२०६॥

क्षीणव्याधि —पुरुषः यथा लोकेऽविगानेन व्याधिमुक्त इति तत्तद्भावेन स्थितो-न स्थापनीयः भवरोग्येव-न मुख्यतद्भावेन तथा मुक्तः—भवव्याधिमुक्तः,

तन्त्रेषु स्थितः। तत्क्षयादिति भवरोगक्षयादित्यर्थः ॥२०६॥

एवं प्रकृतमभिधाय सर्वोपसंहारमाह—

अनेकयोगशास्त्रेभ्यः संक्षेपेण समुद्धृतः।
दृष्टिभेदेन योगोऽयमात्मानुस्मृतये परः ॥२०७॥

अनेकयोगशास्त्रेभ्यः—पातञ्जलादिभ्यः, संक्षेपेण—समासेन, समुद्धृतस्तेभ्यः पृथक्कृतः नवनीतमिव क्षीरादिति। केन क इत्याह दृष्टिभेदेन—उक्तलक्षणेन योगोऽयं—अधिकृत एव। किमर्थमित्याह आत्मानुस्मृत्यर्थं परः—प्रधानो योग इति ॥२०७॥ प्रयोजनान्तरमप्याह—

कुलादियोगिभेदेन, चतुर्धा योगिनो यतः।
अतः परोपकारोऽपि, लेशतो न विरुध्यते ॥२०८॥

कुलादियोगिभेदेन—येऽत्र कुलप्रवृत्तचक्रनिष्पन्नयोगलक्षणेन चतुर्धा—चतुःप्रकारा योगिनो यतः सामान्येन अतः किमित्याह परोपकारोऽपि तथाविधकुलादियोग्यपेक्षया लेशतो न विरुध्यते मनागतोऽपि योगपक्षपातादिभावात् ॥२०८॥ तदत्र—

कुलप्रवृत्तचक्रा ये त एवास्याधिकारिणः।
योगिनो न तु सर्वेऽपि तथाऽसिद्ध्यादिभावतः ॥२०९॥

कुलप्रवृत्तचक्रा—ये कुलयोगिनः प्रवृत्तचक्राश्च य इत्यर्थः, एते चास्य—योगशास्त्रस्य अधिकारिणोऽर्हाः योगिनो न तु सर्वेऽपि सामान्येन। कुत इत्याह तथा—तेन प्रकारेण, असिद्ध्यादिभावतः—गोत्रयोगिनामसिद्धिभावात्, आदिशब्दात्तु निष्पन्नयोगिनां तु सिद्धिभावादिति ॥२०९॥ एतद्विशेषलक्षणमाह—

ये योगिनां कुले जातास्तद्धर्मानुगताश्च ये।
कुलयोगिन उच्यन्ते गोत्रवन्तोऽपि नापरे ॥२१०॥

ये योगिनां कुले जाता—जन्मनैव, तद्धर्मानुगताश्च—योगिधर्मानुगताश्च, ये प्रकृत्यान्येऽपि, कुलयोगिन उच्यन्ते इति गम्यते द्रव्यतो भावतश्च। गोत्रवन्तोऽपि—सामान्येन भूमिभव्या अपि, नापरे—कुलयोगिन इति ॥२१०॥

एतद्विशेषलक्षणमधिकृत्याह—

सर्वत्राऽद्वेषिणश्चैते गुरुदेवद्विजप्रियाः ।
दयालवो विनीताश्च बोधवन्तो यतेन्द्रियाः ॥२११॥

सर्वत्राऽद्वेषिणश्चैते–तथाऽऽग्रहाऽभावेन, तथा गुरुदेवद्विजप्रिया–धर्मप्रभावात् तथा दयालव–प्रकृत्या क्लिष्टपापाभावेन, विनीताश्च–कुशलानुबन्धिभव्यतया । तथा बोधवन्तो–ग्रन्थिभेदेन, यतेन्द्रियाश्चारित्रभावेन ॥२११॥

प्रवृत्तचक्रास्तु पुनर्यमद्वयसमाश्रयाः ।
शेषद्वयार्थिनोऽत्यन्तं शुश्रूषादिगुणान्विताः ॥२१२॥

प्रवृत्तचक्रास्तु पुनः, किंविशिष्टा भवन्तीत्याह यमद्वयसमाश्रयाः–इच्छाप्रमप्रवृत्तियमाश्रया इत्यर्थः, शेषद्वयार्थिनः–स्थिरयमसिद्धियमद्वयार्थिन इत्युक्तं भवति, अत्यन्तं–सदुपायप्रवृत्त्येति, अत एवाह शुश्रूषाश्रवणग्रहणधारणविज्ञानोहापोहतत्त्वाभिनिवेशगुणयुक्ताः ॥२१२॥ तथा—

आद्यावञ्चकयोगाप्त्या तदन्यद्वयलाभिनः ।
एतेऽधिकारिणो योगप्रयोगस्येति तद्विदः ॥२१३॥

आद्यावञ्चकयोगाप्त्या हेतुभूतया, तदन्यद्वयलाभिनः–क्रियावञ्चकफलाऽवञ्चकद्वयलाभिनः, तदवन्ध्यभव्यतयैवम्भूताः, किमित्याह अधिकारिणः, कस्येत्याह योगप्रयोगस्याधिकृतस्य, इत्येवं तद्विदो–योगविदः 'अभिदधति' इति शेषः ॥२१३॥ उपन्यस्तयमादिस्वरूपमाह—

इहाऽहिंसादयः पञ्च सुप्रसिद्धा यमाः सताम् ।
अपरिग्रहपर्यन्तास्तथेच्छादिचतुर्विधाः ॥२१४॥

इह लोके, अहिंसादयो धर्माः पञ्च संख्यया सुप्रसिद्धाः सर्वतन्त्रसाधारणत्वेन, यमा–उपरमाः, सतां–मुनीनाम् इति, किम्पर्यन्ता इत्याह अपरिग्रहपर्यन्ताः । "अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः" (२-३० पा.) इति वचनात् । तथेच्छादिचतुर्विधाः प्रत्येकमिच्छायमाः प्रवृत्तियमाः स्थिरयमाः सिद्धियमा इति ॥२१४॥ एतेषां विशेषलक्षणमाह—

तद्वत्कथाप्रीतियुता तथाऽविपरिणामिनी ।
यमेष्विच्छाऽवसेयेह प्रथमो यम एव तु ॥२१५॥

तद्वत्कथाप्रीतियुता—यमवत्कथाप्रीतियुता तथाऽविपरिणामिनी—तद्भावस्थिरत्वेन यमेपूक्तलक्षणेषु इच्छा अवसेयेह यमचक्रे इय च 'प्रथमो यम एव तु' अनन्तरोदितलक्षणेच्छैवेच्छायम इति कृत्वा ॥२१५॥ तथा—

सर्वत्र शमसार तु यमपालनमेव यत् ।
प्रवृत्तिरिह विज्ञेया द्वितीयो यम एव तत् ॥२१६॥

सर्वत्र—सामान्येन शमसार—तूपशमसारमेव यत्क्रियाविशिष्टं यमपालनं, प्रवृत्तिरिह विज्ञेया यमेषु, द्वितीयो यम एव तत्-प्रवृत्तियम इत्यर्थः ॥२१६॥

विपक्षचिन्तारहितं यमपालनमेव यत् ।
तत्स्थैर्यमिह विज्ञेयं तृतीयो यम एव हि ॥२१७॥

विपक्षचिन्तारहितमतिचारादिचिन्तारहितमित्यर्थं यमपालनमेव यद्विशिष्टक्षयोपशमवृत्त्या तत्स्थैर्यमिह विज्ञेयं यमेषु, एतच्च तृतीयो यम एव हि स्थिरयम इति योऽर्थः ॥२१७॥

परार्थसाधकं त्वेतत्सिद्धि शुद्धान्तरात्मनः ।
अचिन्त्यशक्तियोगेन चतुर्थो यम एव तु ॥२१८॥

परार्थसाधकं त्वेवद्यमपालन सिद्धिरभिधीयते । एतच्च शुद्धान्तरात्मनो नान्यस्य, अचिन्त्यशक्तियोगेन तत्सन्निधौ वैरत्यागात् । एतच्चतुर्थो यम एव तु सिद्धियम इति भाव. ॥२१८॥ अवञ्चकस्वरूपमाह—

सद्भिः कल्याणसम्पन्नैर्दर्शनादपि पावनैः ।
तथा दर्शनतो योग आद्यावञ्चक उच्यते (इष्यते) ॥२१९॥

सद्भिः कल्याणसम्पन्नैर्विशिष्टपुण्यवद्भिः दर्शनादपि पावनैरवलोकनेनापि पवित्रै तथा—तेन प्रकारेण गुणवत्तया विपर्ययाभावेन दर्शन—तथादर्शनम् ततस्तेन यो योग·—सम्बन्धस्तै· सह स आद्यावञ्चक इष्यते सद्यो(गा)ऽवञ्चक इत्यर्थः ॥२१९॥

तेषामेव प्रणामादिक्रियानियम इत्यलम् ।
क्रियावञ्चकयोगः स्यान्महापापक्षयोदयः ॥२२०॥

तेषामेव–सतां प्रणामादिक्रियानियम इत्यलम् क्रियावञ्चकयोगः स्याद्–भवेदिति । अयं च महापापक्षयोदयो–नीचैर्गोत्रकर्मक्षयकृदिति भावः ॥२२०॥

फलावञ्चकयोगस्तु सद्भ्य एव नियोगतः ।
सानुबन्धफलावाप्तिर्धर्मसिद्धौ सतां मता ॥२२१॥

फलावञ्चकयोगस्तु चरमो योगोत्तम किम्भूत इत्याह सद्भ्य एव अनन्तरोदितेभ्यः नियोगतः–अवश्यंतया, सानुबन्धफलावाप्ति–तथा सदुपदेशादिना, धर्मसिद्धौ विषये सतां मता इति ॥२२१॥

एवमेषां स्वरूपमभिधाय प्रकृतयोजनमाह—

कुलादियोगिनामस्मात् मत्तोऽपि जडधीमताम् ।
श्रवणात्पक्षपातादेरुपकारोऽस्ति लेशतः ॥२२२॥

कुलादियोगिनामुक्तलक्षणानां, अस्माद्योगदृष्टिसमुच्चयात्, मत्तोऽपि सकाशात्, जडधीमतामन्येषाम् किमित्याह श्रवणात्–श्रवणेन, पक्षपातादेः पक्षपातशुभेच्छादे, उपकारोऽस्ति लेशतः तथा बीजपुष्टा(ष्ट्या) ॥२२२॥

कः पक्षपातमात्रादुपकार इत्याशङ्कापोहायाह—

तात्त्विकः पक्षपातश्च, भावशून्या च या क्रिया ।
अनयोरन्तरं ज्ञेयं, भानुखद्योतयोरिव ॥२२३॥

तात्त्विकः पक्षपातश्च पारमार्थिक इत्यर्थः भावशून्या प्रति (च या) क्रिया इति, 'अनयोरन्तरं ज्ञेयं' कयोरिवेत्याह भानुखद्योतयोरिव महदन्तरमित्यर्थः ॥२२३॥ तथा चाह—

खद्योतकस्य यत्तेजः तदल्पं च विनाशि च ।
विपरीतमिदं भानोरिति भाव्यमिदं बुधैः ॥२२४॥

खद्योतकस्य–सत्त्वविशेषस्य, यत्तेजः प्रकाशात्मकम् तत्किमित्याह अल्पं च विनाशि च स्वरूपेण विपरीतमिदं भानोर्बह्वविनाशिचाऽऽदित्यस्येति

इत्येवंभावं, भाव्यमिदमधिकृतपक्षपातादेतत्क्रियादिक, बुधैस्तत्त्वनीत्येति ॥२२४॥ विशेषमाह—

श्रवणे प्रार्थनीयाः स्युर्न हि योग्याः कदाचन ।
यतः कल्याणसत्त्वानां, महारत्ने स्थितो यतः ॥२२५॥

श्रवणे--श्रवणविषये प्रार्थनीयाः स्युर्भवेयुः न हि योग्याः कदाचन--शुश्रूषाभावेन स्वतःप्रवृत्तेः । तथा चाह यत्नः कल्याणसत्त्वानां--पुण्यवतां, महारत्ने--चिन्तामण्यादिविषयः, स्थितो यतः--तथौचित्ययोगेन, पक्षपातादेरपि जन्मान्तरावाप्तिश्रुते ॥२२५॥ अयोग्यदानदोषपरिहारायाह—

नैतद्विदस्त्वयोग्येभ्यो, ददत्येन तथापि तु ।
हरिभद्र इदं प्राह, नैतेभ्यो देय आदरात् ॥२२६॥

नैतद्विदस्त्वाचार्या, अयोग्येभ्योऽन्येभ्यो, ददति-यच्छन्ति, एनं योगदृष्टिसमुच्चयाख्यं ग्रन्थम्, तथापि त्वेवमपि व्यवस्थिते हरिभद्रो ग्रन्थकृत, इद प्राह किमित्याह नैतेभ्य अयोग्येभ्यः, देय. अयं-योगदृष्टिसमुच्चयः, आदरात् -आदरेण इदं प्राह ॥२२६॥ किमेतदेवमित्याह—

अवज्ञेह कृताल्पापि, यदनर्थाय जायते ।
अतस्तत्परिहारार्थं, न पुनर्भावदोषत ॥२२७॥

अवज्ञेह योगदृष्टिसमुच्चयाख्ये ग्रन्थे, कृताल्पापि स्वरूपेण यद्यस्मात् अनर्थाय जायते महाविषयत्वेन । अतस्तत्परिहारार्थं न पुनर्भावदोषतः—क्षुद्रतया हरिभद्र इदं प्राहेति ॥२२७॥ इत्थं चैतदङ्गीकर्तव्यम् । अत एवाह—

योग्येभ्यस्तु प्रयत्नेन, देयोऽयं विधिनाऽन्वितैः ।
मात्सर्यविरहेणोच्चैः, श्रेयोविघ्नप्रशान्तये ॥२२८॥

योग्येभ्यस्तु श्रोतृभ्यः प्रयत्नेनोपयोगसारेण देयोऽयं विधिना—श्रवणादिगोचरेण अन्वितैर्युक्तैः, दोषोऽन्यथा प्रत्यवायसम्भवादित्याचार्याः मात्सर्यविरहेण—मात्सर्याभावेन, उच्चैः श्रेयोविघ्नप्रशान्तये पुण्यान्तरायप्रशान्त्यर्थमिति ॥२२८॥ समाप्तोऽयं योगदृष्टिसमुच्चय. ॥

कृतिः श्रीश्वेतभिक्षोराचार्यश्रीहरिभद्रस्येति ॥

## ॥ सवृत्तिर्योगदृष्टिसमुच्चयः समाप्तः ॥



॥ ओं अर्हं नमः ॥

# श्रीमद्धरिभद्रसूरिप्रणीतः वृत्तिसमलङ्कृतः

# योगबिन्दुः



सद्योगचिन्तामणितोऽनघीघो । येनाधिजग्मे जगतः पतित्वम् ॥
स योगिवृन्दारकवन्दनीयो । घतादवद्यानि घनं जिनो न ॥१॥
सुधाबिन्दोरिवानन्दममन्दमुपचिन्वत ।
योगबिन्दोः समासेन, वृत्तिरेषा विधीयते ॥२॥
गुरूपदेशो न च तादृगस्ति, मतिर्न वा काचिदुदाररूपा ।
तथापि योगप्रियतावशेन, यत्नस्तदभ्यासकृते ममायम् ॥३॥

तस्य चेदमादिसूत्र " नत्वा " इत्यादि श्लोकद्वयम्—

नत्वाद्यन्तविनिर्मुक्तं शिवं योगीन्द्रवन्दितम् ।
योगबिन्दुं प्रवक्ष्यामि तत्त्वसिद्ध्यै महोदयम् ॥१॥
सर्वेषां योगशास्त्राणामविरोधेन तत्त्वतः ।
सन्नीत्या स्थापकं चैव मध्यस्थास्तद्विदः प्रति ॥२॥

नत्वा—ऽभिवन्द्य, आदि—प्रथमभावः, अन्त—पर्यवसानं, ताभ्यां विनिर्मुक्तं—विरहितम् किमित्याह शिवं—सकलोपप्लवकलाविकलं देवताविशेषम् । कीदृशमित्याह योगीन्द्रवन्दितं—गणधरादिमहामुनिनमस्कृतम्, किमित्याह योगबिन्दुं—योगस्य मोक्षहेतोरनुष्ठानस्य बिन्दुरवयवो योगबिन्दुः, तत्प्रतिपादकतया प्रकरणमपि योगबिन्दुरुच्यते ततो योगबिन्दुनामकं प्रकरणं प्रवक्ष्यामि—अभिधास्ये । किमर्थमित्याह तत्त्वसिद्ध्यै—आत्मादितत्त्वप्रतीतिनिमित्तम् । पुनरपि कीदृशं योगबिन्दुमित्याह महोदयं—महान्—प्रशस्य उदयो निःश्रेय-

साभ्युदयससिद्धिरूपो यस्मात स तथा तम् ॥१॥ पुनरपि किदृश योगबिन्दु-मित्याह सर्वेषा—कपिलसुगतादिप्रणीतयोगशास्त्राणां—अध्यात्मग्रन्थानां अविरोधिनां (अनिरोधेन) अविघटनेनोपलक्षितम्। तत्त्वतः—ऐदम्पर्यालोचनेन, न पुन शाब्दन्यायेनापि, तस्य प्रतिदर्शनमन्यथान्यथाप्रवृत्तत्वात्। पठ्यते च—प्रशान्तवाहितासंज्ञ विसभागपरिक्षयम्। शिववर्त्म ध्रुवाध्वेति, योगिभिर्गीयते ह्यद॰ ॥१॥ (यो. द. स. १७६) इति ॥ तथा सन्नीत्या—अन्वयव्यतिरेकशुद्ध युक्तिरूपया स्थ पकमविसंवादापादनेन प्रतिष्ठाकारि सर्वयोगशास्त्राणामेव, 'चैव' इति समुच्चये।

ननु योगशास्त्रकाराणा निजनिजमत्यत्यन्ताभिनिवेशेन विप्रतिपन्नत्वात्कथ सर्वयोगशास्त्राणा संस्थापकमिदं प्रकरण स्यादित्याशङ्कयाऽऽह मध्यस्थान् स्वदर्शनरागपरदर्शनद्वेषयोर्मध्यभागवर्तिन, तद्विद॰—योगशास्त्रविदः श्रोतॄन् 'प्रति' इति स्वदर्शनं प्रतीत्य, अमध्यमेषु श्रोतृषु वस्तुस्थापनायोगात्। तथा चोक्तम्-"आग्रही वत निनीषति युक्ति, तत्र यत्र मतिरस्य निविष्टा। पक्षपातरहितस्य तु युक्तिर्यत्र तत्र मतिरेति निवेशम्" ॥१॥ इति ॥ आद्यन्तविनिर्मुक्तं इति च विशेषणं शिवसन्तानापेक्षम्, न पुनरेकः कश्चिदनादिशुद्ध॰ शिवः समस्ति, तस्य शास्त्रान्तरे महता प्रबन्धेन प्रतिषिद्धत्वात्। अत्र च 'नत्वा शिवं' इत्यनेन विघ्नापोहहेतुशास्त्रमूलमङ्गलमुक्तम्। 'योगबिन्दु' इत्यनेन प्रेक्षावत्प्रवृत्त्यर्थमभिधेयम्। 'तत्त्वसिद्धयै' इत्यनेनानन्तरप्रयोजनम्। 'महोदय' इत्यनेन तु परम्पराप्रयोजनमभिहितम्। अभिधानाभिधेयलक्षणश्च सम्बन्ध॰ स्वयमेव वाच्य इति ॥२॥

सर्वेषां योगशास्त्राणामविरोधेन इत्युक्तम्, अथ तमेव भावयन्नाह—

मोक्षहेतुर्यतो योगो भिद्यते न ततः क्वचित्।
साध्याभेदात्तथाभावे तूक्तिभेदो न कारणम् ॥३॥

मोक्षहेतु -निवृत्तिनिमित्तं, यतो—यस्मात्कारणात् योग॰ सर्वैर्योगशास्त्रकारैः सञ्जीयते, भिद्यते—भेदमनुभवति न—नैव, ततो—मोक्षहेतुत्वाद्धेतोः, क्वचिद्योगशास्त्रे। एतदपि कुत इत्याह साध्याऽभेदात्—साध्यस्य योगाभ्यासनिष्पाद्यस्य

मोक्षस्याभेदादेकरूपत्वात् । सकलकर्मक्लेशक्षयलक्षणो हि मोक्षः, न तत्र कश्चिद् भेद इति। एवं सति यत्सिद्धं तदाह—तथाभावे तु मोक्षाभेदभावे पुन र्मति, उक्तिभेदः–योगशास्त्रप्रवामादीना योगा(ज्ञा)नां यो भणितः स न कारण—हेतुर्योगभेदस्य । न हि नाममात्रभेदेन भावा भिद्यन्ते, एकस्यापि शक्रादेरनेकेन नाम्ना व्यवह्रियमाणत्वात् ॥३॥

अथात्रैव विशेषमाह 'मोक्षहेतुत्व' इत्यादि—

मोक्षहेतुत्वमेवास्य किन्तु यत्नेन धीधनैः ।
सद्गोचरादिसंशुद्धं मृग्यं स्वहितकाङ्क्षिभिः ॥४॥

मोक्षहेतुत्वमेव—मोक्षनिमित्तभाव एव नापरं किञ्चित्, अस्य—योगस्य, किन्तु—केवल, यत्नेना—ऽऽदरेण, धीधनैः—बुद्धिमद्भिः 'मृग्यम्' इत्युत्तरेण योगः। कीदृशमित्याह सताऽनुपचरितेन, गोचरादिनाऽनन्तरमेव दर्शयिष्यमाणेन, सशुद्धम्—अनवद्यम् मृग्य—आत्मादौ मोक्षहेतुर्योगो युज्यत इत्येवंरूपेण निपुणोहापोहयोगेन गवेषणीय, कीदृशैः ? स्वहितकाङ्क्षिभि -आत्मकल्याण-चिन्तकैः । योगवञ्चनायां हि सर्वपुरुषार्थवञ्चना नियमात्सम्पद्यते । यदवाचि "एसो य उत्तमो ज, पुरिसत्थो एत्थ वञ्चिओ नियमा।
वञ्चिज्जइ सव्वेसुं, कल्लाणेसु न संदेहो [पंचवस्तु-१०२५]" ॥४॥

अथ कस्मादस्य गोचरादिशुद्धिः मृग्यत इत्याशङ्क्याह—

गोचरश्च स्वरूप च फलं च यदि युज्यते ।
अस्य योगस्ततोऽयं यन्मुख्यशब्दार्थयोगतः ॥५॥

गोचरो—विषयः परिणामिजीवलक्षण स्वरूपं—सर्वार्थेषूचितप्रवृत्तिल-क्षणम् फल—मोक्षात्मकम्। चकारा उक्तसमुच्चये, यदि इत्यभ्युपगमे, युज्यते—घटते अस्य—योगस्य, योगः ततो गोचरादियोगात अय वस्तुतो यद्यस्मात्तत् स्यात्। एतदपि कुत इत्याह—मुख्यस्याऽनुपचरितस्य, शब्दार्थस्य—'मोक्षेण योजनाद्योग' इत्येवलक्षणस्य योगतो—घटनात् ॥५॥

अथ यथोद्देशं निर्देशाद् गोचरादिशुद्धिमेव भावयति—

आत्मा तदन्यसंयोगात्संसारी तद्वियोगतः ।
स एव मुक्त एतौ च तत्स्वाभाव्यात्तयोस्तथा ॥६॥

आत्मा—जीवः तदन्यसंयोगात्-तस्मादात्मनोऽन्येन कर्मणा सम्बन्धात् किमित्याह संसारी-नारकादिपर्यायवान् । तथा तद्वियोगतः—तदन्यविरहात् । स एव यो द्रव्यरूपतयात्मा संसारी न पुनरन्यः मुक्तो—मोक्षभाक् । एतौ च संसारमोक्षौ पुनः तत्स्वाभाव्यात्संसारहेतुर्मोक्षहेतुश्च स्वभावो ययोस्तौ तथा तद्भावस्तस्मात् तयोस्तदन्यसंयोगवियोगयोः तथा इति वक्तव्यान्तरसमुच्चयार्थः ॥६॥ एतदेवाह—

अन्यतोऽनुग्रहोऽप्यत्र तत्स्वाभाव्यनिबन्धनः ।
अतोऽन्यथा त्वदः सर्वं न मुख्यमुपपद्यते ॥७॥

"महेशानुग्रहाद्बोधनियमौ" इतिवचनाद् अन्यतो-महेशात्, अनुग्रहोऽप्युपकारोऽपि शुद्धज्ञानक्रियालाभलक्षणः, किं पुनः पूर्वोक्तौ संसारापवर्गौ इत्यपिशब्दार्थः, अत्र-योगचिन्तायाम् किमित्याह तत्स्वाभाव्यनिबन्धनः-स महेशानुग्रहयोग्यः स्वभावो यस्य स तथा तद्भावस्तत्स्वाभाव्यम्; तन्निबन्धनं हेतुर्यस्य स तथा । विपर्यये बाधामाह अतः-तत्स्वाभाव्यात्, अन्यथा तु-अन्येन प्रकारेण पुनः केवलमहेशानुग्रहादिरूपेण, अदः-संसारित्वादि, सर्वं-कृत्स्नं, न-नैव, मुख्यं-अनुपचरितं, उपपद्यते-घटते । यथा हि कर्पासादिः स्वभावत एवाऽयोग्यो लाक्षारसादिना रज्यमानोऽपि न तात्त्विकं रागं प्रतिपद्यते किं तु रागाभासमेव, एवमात्मनां योग्यताविरहे महेशेन क्रियमाणावप्यनुग्रहनिग्रहौ न तात्त्विकौ स्यातामिति तत्स्वाभाव्यमवश्यमभ्युपगन्तव्यम् । तदभ्युपगमे च तत एव संसारमोक्षोपपत्त्या न किंचिन्महेशानुग्रहादिना प्रयोजनमस्तीति सिद्धं "आत्मा तदन्यसंयोगात्संसारी" इत्यादि ॥७॥ इत्थं महेशवादिमतमपास्यात्रैव पुरुषाद्वैतमतमपाकुर्वन्नाह—

केवलस्यात्मनो न्यायात्सदात्मत्वाविशेषतः ।
संसारी मुक्त इत्येतद्द्वितयं कल्पनैव हि ॥८॥

केवलस्य–तदन्याऽदृष्टादिविकलस्य, आत्मनो–जीवस्य, न्यायाद्युक्तिमार्गात्, सदा–सर्वकालमपि आत्मत्वस्य–स्वरूपमात्ररूपस्य, अविशेषतो –विशेषकारणकर्मसंयोगादेरनभ्युपगमात्। किमित्याह 'संसारी–मुक्त' इत्येतत पूर्वमेव प्रपञ्चितं, द्वितय–आत्मावस्थाद्वयलक्षणं वस्तु कल्पनैव स्वविकल्परूपैव केवला। हि–स्फुटम्। न पुनर्वस्तुव्वेपि तथा वर्तत इति ॥८॥ एतदेव दृष्टान्तोपन्यासेन भावयन्नाह—

काञ्चनत्वाविशेषेऽपि यथा सत्काञ्चनस्य न।
शुद्ध्यशुद्धी ऋते शब्दात्तद्वदत्राप्यसंशयम् ॥९॥

काञ्चनत्वस्य–सुवर्णभावस्य, अविशेषेऽप्यभेदेऽपि, भेदे पुनर्भवत एवेत्यपिशब्दार्थः, यथा इति दृष्टान्तार्थः, सत्काञ्चनस्य–सर्वमलविकलस्य कल्याणनाम्नो हेम्न किमित्याह न–नैव, शुद्ध्यशुद्धी–निर्मलतामलिनतारूपे स्याताम्। किं सर्वथा नेत्याह ऋते–विना,शब्दात्–वाचकाद्विकल्पपुरुषप्रयुक्तात्, तद्वत्-सत्काञ्चनशुद्ध्यशुद्धिवत्, अत्रापि केवल आत्मन्यभ्युपगते, किं पुनः सत्काञ्चन इत्यपिशब्दार्थः, असंशयं-असन्देहम् ऋते शब्दात्संसारित्वमुक्तत्वे न भवेतामिति ॥९॥

ननु यत्प्रागदन्यदुक्तं तत्किल कर्म, तच्च क्रियमाणत्वेनावश्यं कर्तारमात्मानमपेक्षते, स च कर्मण प्रागेव सिद्धरूपोऽभ्युपगन्तव्य, समकालभाविनोः सव्येतरगोविषाणयोरिव कार्यकारणभावाभावाद् इति कथं तस्य स्वरूपमात्रस्थितस्यात एव शुद्धरूपस्य प्रथम. कर्मसंयोगः संसारित्वहेतुरित्याशंक्याह—

योग्यतामन्तरेणास्य संयोगोऽपि न युज्यते।
सा च तत्तत्त्वमित्येव तत्संयोगोऽप्यनादिमान् ॥१०॥

योग्यता–कर्मसंयोगानुकूलपरिणतिरूपा अन्तरेण–विना अस्याऽऽत्मन संयोगोऽपि–कर्मणा सह सम्बन्धः, किं पुन. कर्मसंयोगाभावे संसारित्वमित्यपिशब्दार्थः, न युज्यते-न घटत एव। यदि नामैव ततः किमित्याह सा च–सा पुनर्योग्यता, तत्तत्त्व-तस्यात्मनस्तत्त्वं स्वभावभूतत्वं वर्तते, न

पुनरुपाधिजन्य किञ्चिद्रूपम्। इत्येवं-अनेन प्रकारेणात्मस्वभावभवनरूपेण योग्यतायाः तथा तत्संयोगोऽपि-कर्मसंयोगः किं पुनर्जीव इत्यपिशब्दार्थः अनादिमान्-प्रवाहापेक्षयाजीववदादिकालविकल. ॥१०॥

एतदपि कथमित्याह—

योग्यतायास्तथात्वेन विरोधोऽस्यान्यथा पुनः।
अतीतकालसाधर्म्यात् किन्त्वाज्ञातोऽयमीदृशः ॥११॥

योग्यताया-उक्तरूपायाः तथात्वेन-जीवस्वभावभूतत्वादनादित्वेन हेतुना, अत्रैव विपर्यये-दोषमाह विरोध-विघटमानता, अस्य-बन्धस्य, अन्यथा पुन-आदिमत्त्वे योग्यताया अभ्युपगम्यमाने सति। तथाहि यद्यादिमती योग्यता, तदा बन्धोऽप्यादिमानेव प्राप्नोति। न चैव, तस्यानादित्वेन सर्वैरेवाभ्युपगतत्वात्। तथा शुद्धस्याप्यकस्मादेव कर्मसंयोगाभ्युपगमे सिद्धानामपि तत्प्रसङ्गादनाश्वासः सम्पद्येत इति। तस्माद्योग्यता तदुद्भवश्च बन्धो द्वावप्यनादिमन्तावभ्युपगन्तव्याविति। ननु कृतकत्वेन कथमनादिमत्त्वं बन्धस्य श्रद्धातुमुचितम्? सत्यम्, अतीतकालसाधर्म्याद्-अतिक्रान्तकालसादृश्येन, किंतु-केवलं, आज्ञात-आगमात् अयं-कर्मबन्ध. ईदृश-अनादि स्यात्। यथा ह्यतीतकालः प्रतिक्षणमपरापररूपेण भूतोऽपि प्रवाहापेक्षयानादि तथा बन्धोऽपि जिनवचनप्रामाण्यादवगन्तव्य इति ॥११॥

अथ प्रपञ्चतो महेशानुग्रहान्मोक्ष इति निराकुर्वन्नाह—

अनुग्रहोऽप्यनुग्राह्ययोग्यतापेक्ष एव तु।
नाणु कदाचिदात्मा स्याद् देवतानुग्रहादपि ॥१२॥

अनुग्रहोऽपि-महेशकृतः किं पुन. शेषक्रियाविशेष इत्यपिशब्दार्थ, अनुग्राह्यस्य-अनुग्रहविषयस्य जन्तो., योग्यतापेक्ष एव तु-योग्यतामेवाऽपेक्ष्य न पुनरन्यथा। अमुमेवार्थं प्रतिवस्तूपमया भावयति, न-नैव, अणु.-पुद्गलविशेष., कदाचित्-क्वापि काले, आत्मा-जीवः, स्यात्। कुतोऽपीत्याह देवतानुग्रहादपि-देवताया दिव्यविशेषरूपाया अनुग्रह.-प्रसादः, तस्मादपि किं पुनस्तदभाव इत्यपिशब्दार्थ. ॥१२॥ अमुमेवार्थं भावयति—

कर्मणो योग्यतायां हि कर्त्ता तद्व्यपदेशभाक् ।
नान्यथाऽतिप्रसङ्गेन लोकसिद्धमिदं ननु ॥१३॥

कर्मण.-क्रियाविषयस्य सामान्येन मुद्गादेर्वस्तुनो, योग्यतायां-योग्यभावे हि–यस्माकारणात् कर्ता-पाचकादि. तद्व्यपदेशभाक् तं पाचकादिरूपं व्यपदेशं भजते य. स तथा । विपक्षे बाधामाह-न-नैव, अन्यथा-अन्येन प्रकारेण कर्मण. पाकादियोग्यताविरहे, कर्ता तद्व्यपदेशभाक् कथमित्याह अतिप्रसङ्गेन-अतिव्याप्तिलक्षणेन, लोकसिद्ध–बालाबलादिजनप्रतीतम् इदं –पूर्वोक्तं वस्तु ननु–निश्चितम् । नास्मिन्नर्थेऽन्यप्रमाण गवेषणीयमिति भाव ॥१३॥ पुनरप्यमुमेवार्थं पुरस्कृत्याह—

अन्यथा सर्वमेवैतदौपचारिकमेव हि ।
प्राप्नोत्यशोभन चैतत्तत्त्वतस्तदभावतः ॥१४॥

अन्यथा–स्वयोग्यतामन्तरेणापि कर्मणो यदि कर्ता तद्व्यपदेशभागिष्यते, तदा सर्वमेवैतद्बाह्यमाभ्यन्तरं च कार्यजातं किमित्याह औपचारिकमेव –उपचारमात्रोद्भवमेव, हि–स्फुटं, प्राप्नोति–प्रसज्यते माणवकसिंहत्ववत । यदि नामैवं, तथापि को दोष इत्याह अशोभनं च-अशोभनं पुन', एतत् –सर्वमेवौपचारिकतयाऽभ्युपगम्यमानम्, कुत इत्याह तत्त्वतः पारमार्थिकतया वृत्त्या, तदभावत-औपचारिकवस्तुनोऽभावात् । न ह्युपचरिता भावा माणवकसिंहत्वादय पारमार्थिकं सिंहादिरूप भजन्ते, एवं मोक्षादयोऽप्यात्मन. स्वयोग्यताया विरहे महेशानुग्रहादेः परैरभ्युपगम्यमाना न पारमार्थिकरूप-भाजो भवेयुरिति ॥१४॥ किं च—

उपचारोऽपि च प्रायो लोके यन्मुख्यपूर्वकः ।
दृष्टस्ततोऽप्यदः सर्वमित्थमेव व्यवस्थितम् ॥१५॥

उपचारोऽपि चोपचरितवस्तुव्यवहाररूप. 'किं पुनर्मुख्यो मुख्यपूर्वको व्यवहार' इत्यपिचशब्दार्थं, प्रायो-बाहुल्येन लोके-व्यवहारार्हे जने यद्यस्मात् मुख्यपूर्वक-निरुपचरितवस्तुव्यवहारापेक्ष दृष्ट.-उपलब्धः । प्रायोग्रहणं क्वचिद्व्यभिचारार्थं तेन "मेरुमन्थानेन मथितो नीरनिधि. सुरैः"

इत्यादयोऽत्यन्तमसम्बद्धाः केचिल्लोकव्यवहारा न मुख्यवस्तुव्यवहारपूर्वकाः, किं तु मिथ्याविकल्पवासनाप्रकोपपूर्वका इति । ततोऽपि-मुख्यपूर्वकत्वादप्यु-पचारस्य 'किं पुन. प्रागुक्तयुक्तेरि'त्यपिशब्दार्थ, अद एतत्स्वयोग्यताया सकाशात्कर्मबन्धादि सर्वं-निरवशेषम् इत्थमेव-व्यवस्थापितनीत्यैव व्यवस्थितं -प्रतिष्ठितम् ॥१५॥ साम्प्रतमुक्तग्रन्थस्य भावार्थमाविष्करणाय प्राह—

ऐदम्पर्यं तु विज्ञेयं, सर्वस्यैवास्य भावतः ।
एवं व्यवस्थिते तत्त्वे योगमार्गस्य सम्भव· ॥१६॥

ऐदम्पर्यं तु-परमार्थः पुन , विज्ञेय-अवगन्तव्यं, सर्वस्यैवास्योपन्यस्त-ग्रन्थस्य कीदृशमित्याह भावत -परमार्थत·, एव—उक्तन्यायेन, व्यवस्थिते तत्त्वे-आत्मादौ, योगमार्गस्य-वक्तुमुपक्रान्तस्य, सम्भवः-घटना भवेत् । एवमेव तत्त्वे व्यवस्थिते योगमार्गस्य भावत· सम्भव इत्यैदम्पर्यं विज्ञेय-मित्यर्थः ॥१६॥ कुत इत्याह—

पुरुषः क्षेत्रविज्ज्ञानमिति नाम यदात्मनः ।
अविद्या प्रकृतिः कर्म तदन्यस्य तु भेदत· ॥१७॥

'पुरुषो' जैनवेदान्तिकानां, क्षेत्रवित्-सांख्यानां, ज्ञानमिति बौद्धानाम् इत्यनेन प्रकारेण नाम-सञ्ज्ञा यद्यस्मात्कारणात् आत्मनो-जीवस्य । तथा अविद्या -बौद्धवेदान्तिकाना प्रकृति -सांख्याना कर्म-जैनानाम् । तदन्यस्य तु-तस्मा-दात्मनोऽन्यस्य कर्मण· पुन· 'नाम' इत्यनुवर्तते भेदतो-दर्शनभेदेन ॥१७॥

भ्रान्तिप्रवृत्तिबन्धास्तु सयोगस्येति कीर्तितम् ।
शास्ता वन्द्योऽविकारी च तथानुग्राहकस्य तु ॥१८॥

भ्रान्ति-र्वैदान्तिकसौगतानां, प्रवृत्ति -सांख्याना, बन्धः-पुनर्जैनाना, सयोगस्य-तदन्यसम्बन्धलक्षणस्य, इत्येवं भेदेन कीर्तितम् "नाम" इत्यनु-वर्तते । शास्ता-जैनानां वन्द्य -सौगतानां, अविकारो च शैवभागवतानाम् तथा इत्युक्तसमुच्चये अनुग्राहकस्य तु-अनुग्रहविधातुर्जिनादेः पुनर्नाम । इदमुक्तं भवति, इहात्मादीनि योगोपयोगादीनि यावन्ति वस्तूनि जैनमते प्रपञ्चितानि तावन्त्येव दर्शनान्तरेष्वपि परं नामभेदेन, न च नामभेदो

बाधकः, एकस्याप्यनेकभेदसम्भवात्, किं तु परिणामिन्यात्मनि स्वयोग्यतयैव च कर्मसंयोगं तद्वियोगं चानुभवति सत्यभ्युपगते सर्वदर्शनोक्तो योगो घटते। अतः सर्वैः स तथाऽभ्युपगन्तव्य इति ॥१८॥ तस्मात्किं सिद्धमित्याह—

साकल्यस्यास्य विज्ञेया परिपाकादिभावतः।
औचित्याबाधया सम्यग्योगसिद्धिस्तथा तथा ॥१९॥

साकल्यस्यात्मतदन्यसंयोगादिभावलक्षणस्य अस्यानन्तरमेवोपन्यस्तस्य विज्ञेया—बोद्धव्या परिपाकस्य—भव्यत्वपाकरूपस्य, आदिशब्दात्तदन्यसंयोगह्रासस्य शास्तुरनुग्रहस्य च यो 'भावः' तस्मात्, या औचित्याऽबाधायोग्यप्रवृत्तिलक्षणा तया किमित्याह सम्यग्योगसिद्धिः-निरुपचरितयोगनिष्पत्तिः। तथा तथा—तेन तेनापुनर्बन्धकाद्यनुष्ठानाराधनारूपेण जायते इति ॥१९॥ किं च—

एकान्ते सति तद्यत्नस्तथाऽसति च यद् वृथा।
तत्तथायोग्यतायां तु तद्भावेनैष सार्थकः ॥२०॥

इह परमार्थचिन्तायामात्मादयो भावाः स्वरूपेण सन्तः (पररूपेण चाऽसन्तः)। एवं 'एकान्ते सति'—एकान्तेनैव स्वरूपेण पररूपेण चेत्यर्थः, 'सति' विद्यमाने 'आत्मनि' इति गम्यते, तद्यत्नः—योगप्रयत्नः, 'तथा' इति समुच्चये, असति चैकान्तेनैव किमित्याह 'यत्'—यस्मात् वृथा—निरर्थको योगः। तथाहि, यदि योगी सर्वथा सन्नेवाऽभ्युपगम्यते तदा तस्याऽयोगिरूपेणाऽपि सत्त्वात्पररूपप्रवेशेन स्वरूपव्याहतिः स्यात्, तथा च योगिनः स्वरूपाभावाद्योगाभ्यासो निरर्थक एव स्यात्, परकीयाऽयोगेनोपहतत्वात्। एकान्ताऽसत्त्वे त्वात्मनः स्वरूपस्याप्यभावात् को नाम योगाभ्यासवान् तत्फलभोगी च स्यात्। न हि खरविषाणं क्वचित्प्रवर्तते फलं वाऽऽसादयतीति। तर्हि कथं न वृथैष स्यादित्याह—तस्याऽऽत्मनः 'तथायोग्यतायां तु'—स्वरूपपररूपापेक्षया सत्त्वाऽसत्त्वयोग्यतायां सत्यां पुनः किमित्याह 'तद्भावेन'—आत्मनः फलरूपतया परिणामलक्षणेन, 'एष'—योगः, 'सार्थकः'—स्वसाध्यनिष्पादक इति। यदा हि स्वरूपेण सन् पररूपेण चासन्नात्मा परिणामी चेष्यते, तदायमवृथा योगः

स्यात्, न पुनरन्यथेति ॥२०॥ एवं नित्याऽनित्ये सदसद्रूपे चात्मनि प्रसाधिते यदन्यदपि सिद्धं तद्दर्शयति—

दैवं पुरुषकारश्च तुल्यावेतदपि स्फुटम्।
युज्येते एवमेवेति वक्ष्याम्यूर्ध्वमदोऽपि हि ॥२१॥

'दैवं' पूर्वकृतकर्म, 'पुरुषकार'—पुरुषव्यापार, चकार. समुच्चये। 'तुल्यौ' —समसामर्थ्यौ पुरुषार्थसिद्धिं प्रतीति यच्छास्त्रान्तरेषु गीयते 'एतदपि' किं पुन. प्रस्तुतो योग इत्यपिशब्दार्थ. 'स्फुट'—व्यक्तम् 'युज्यते'—घटते एवमेवे-त्युक्तनीत्यैव 'इति.' पादपरिसमाप्तौ। तथा 'वक्ष्यामि'—भणिष्यामि ऊर्ध्वमे-तद्ग्रन्थोपरिभागे 'अदोऽपि हि' दैवपुरुषकारतुल्यत्वं, न केवल प्रस्तुत योग-मित्यपिहिशब्दार्थ ॥२१॥

आह किमर्थं गोचरादिशुद्धयायोगो मृग्यत इत्याशंक्याह—

लोकशास्त्राऽविरोधेन यद्योगो योग्यता व्रजेत्।
श्रद्धामात्रैकगम्यस्तु हन्त नेष्टो विपश्चिताम् ॥२२॥

'लोकशास्त्रयो'र्लोकप्रतीत्यागमयो. अविरोधेनाऽविघटनेन, यद्-यस्माद् 'योगो' वक्तुमुपक्रान्तो 'योग्यता' फल प्रति योगभाव तात्त्विक 'व्रजेत्'। न ह्येकान्तेन नित्येऽनित्ये वात्मनि योगो युज्यते, आत्मावस्थान्त-रतया लोकशास्त्रयोः प्रतीयमानत्वात्तस्य। न च नित्यावस्थान्तरप्रतिपत्तिरस्ति, तस्य सर्वदैकरूपत्वात्, अनित्यस्य च क्षणक्षयित्वेनेति। इति योगस्य गोचरादिशुद्धिरन्विष्यत इति। ननु गोचराद्यशुद्धावपि कपिलादिभिर्योगो निरूप्यमाण उपलभ्यत इत्याशंक्याह-श्रद्धामात्रेण-पूर्वापरविमर्शविकलेन, अत एवैकेन-स्वदर्शनपक्षपातरूपेण, गम्यते-निश्चीयते यः स तथा तुर्विशेषणे, 'हन्त' इति कोमलामन्त्रणे, नेष्टो-नाभिमत., विपश्चितां-मतिमताम्, कषच्छेदतापशुद्धवस्तुश्रद्धालुत्वात्तेषामिति ॥२२॥ तथा—

वचनादस्य संसिद्धिरेतदप्येवमेव हि।
दृष्टेष्टाऽबाधितं तस्मादेतन्मृग्यं हितैषिणा ॥२३॥

वचनाद्-आगमात् अस्य-योगस्य, संसिद्धि'-प्रतीतिर्जायते, न पुनरन्यथा, "परलोकविधौ मानं वचनं" इतिवचनप्रामाण्यात् । यदि नामैव, ततः किमित्याह 'एतदपि वचनं'-किं पुनर्योग इत्यपिशब्दार्थः । 'एवमेव हि' योगवदेव परिणामिन्येवात्मनि घटते, भावपरिणामान्तरसम्भवेन वचनप्रवृत्तेरुपपद्यमानत्वात । तत्तु वचनमनेकमिति हृदि व्यवस्थाप्याह-'दृष्टेष्टाभ्या'-वक्ष्यमाणरूपाभ्या, अबाधित-अविरुद्धं, 'तस्मात्'—योगसिद्धिहेतुत्वात , एतद्—वचन, 'मृग्य'-गवेषणीयं, धीरैरिणा-मनीषिणेति ॥२३॥ आह—किमर्थमीदृशं वचनं मृग्यते ? उच्यते—

> दृष्टबाधैव यत्रास्ति ततोऽदृष्टप्रवर्तनम् ।
> असच्छ्रद्धाभिभूताना केवलं ध्यान्ध्यसूचकम् ॥२४॥

'दृष्टेनैव'-प्रत्यक्षोपलब्धेनैव द्रव्यरूपत्वाव्स्थितस्यात्मादेरर्थस्य परिणामेन किं पुनरन्यप्रमाणोपलब्धेनेत्येवकारार्थः, बाधा -विरोध 'यत्र'-शास्त्रे प्रज्ञाप्यमानस्य नित्यत्वादे, अस्ति-विद्यते ततः-शास्त्रात्, अदृष्टेऽर्थे-ऽदृष्टफलविषयत्वेन यमनियमादावनुष्ठाने 'प्रवर्तनम्' असती-असुन्दरा या श्रद्धा-रुचिः भक्षितधत्तूराणामिवेष्टकाखण्डादौ सुवर्णश्रद्धासमाना तयाऽभिभूतानां विह्वलीकृतानाम् किमित्याह-'केवल-' नापर किंचित्, 'ध्यान्ध्यसूचकं-'भ्रान्त्याविर्भावकम्, न तत काचिदिष्टफलसिद्धिरिति भावः ॥२४॥

तर्हि कीदृशाद्वचनात्प्रवृत्तिर्ज्यायसीत्याह—

> प्रत्यक्षेणानुमानेन यदुक्तोऽर्थो न बाध्यते ।
> दृष्टोऽदृष्टेऽपि युक्ता स्यात् प्रवृत्तिस्तत एव तु ॥२५॥

'प्रत्क्षेण'-चाक्षुषादिना 'अनुमानेन'-लिङ्गलिङ्गिसम्बन्धग्रहणोद्भवेन, 'यदुक्तो'-यत्र भणितोऽर्थ आत्मादि, 'न बाध्यते'-न विरोधमानीयते । 'दृष्टः' स्वसंवेदनादिसिद्धः । 'अदृष्टेऽपि-स्वर्गापवर्गादावर्थे 'किं पुनर्दृष्टे' इत्यपिशब्दार्थ 'युक्ता'-घटमाना, स्यात्प्रवृत्तिर्हानोपादानरूपा । 'तत एव तु'-तस्मादेव वचनात्, न पुनरन्यतोऽपि, व्यंसकवचनस्य महानर्थहेतुत्वादिति ॥२५॥ अत्रैव विपक्षे बाधामाह—

अतोऽन्यथाप्रवृत्तौ तु स्यात् साधुत्वाद्यनिश्चितम् ।
वस्तुतत्त्वस्य हन्तैवं सर्वमेवासमञ्जसम् ॥२६॥

'अत' उक्तगुणाद्वचनाद् 'अन्यथा तु'-यत कुतोऽपि वचनात् 'प्रवृत्तौ' पुनर्धर्मार्थिनः सत्याम् स्याद्-भवेत् 'साधुत्वादि'-साधुत्वमसाधुत्व च 'अनिश्चित'मनिर्धारितम् । कस्येत्याह 'वस्तुतत्त्वस्य'-आत्मादिरूपस्य परिशुद्धवचनपूर्वकत्वाद्वस्तुतत्त्वनिश्चयस्य, तस्य च धर्मार्थिनो यदृच्छावचनपूर्वकतया प्रवृत्तत्वात् । एवमपि किमित्याह 'हन्त' इति पूर्ववत् 'एव' वस्तुतत्त्वाऽनिश्चयेन प्रवृत्तौ, 'सर्वमेव' ऐहिकमामुष्मिकं च 'असमञ्जसं' -असङ्गतार्थं स्यात् । न हीहाऽनिश्चितव्यवहारतत्त्वा व्यवहारिणोऽपि किंचित्फलमवाप्नुवन्ति, किं त्वनर्थमेवेति ॥२६॥ तर्हि कथं वस्तुव्यवस्था स्याद्य-पूर्वक प्रवृत्त. पुमान्न फलेन वञ्च्येत इत्याह—

तद्दृष्टाद्यनुसारेण वस्तुतत्त्वव्यपेक्षया ।
तथा तथोक्तिभेदेऽपि साध्वी तत्त्वव्यवस्थिति· ॥२७॥

तत्-तस्माद् 'दृष्टस्य'—प्रत्यक्षोपलब्धस्य आदिशब्दात्तथाविधार्थान्यथानुपपत्तिवशेनानुमितस्य चात्मादेरर्थस्य अनुसारेणानुवर्त्तनेन 'यद्वस्तुतत्त्वं'—परिणामित्वादिर्वस्तुस्वभाव', तस्य 'व्यपेक्षा'—आश्रयणरूपा तया, 'साध्वी तत्त्वव्यवस्थिति.' इत्युत्तरेण योग' । 'तथा तथा'—तेन तेन प्रकारेण प्रतिदर्शनं प्रज्ञापनामाश्रित्य, उक्तिभेदेऽपि—"पुरुष' क्षेत्रविज्ज्ञानमित्यादि" प्राग्निरूपितरूपे, अपिशब्दात्किं पुनस्तदभेदे 'साध्वी'—अविरुद्धा, 'तत्त्वव्यवस्थिति' जीवादितत्त्वव्यवस्थारूपा ॥२७॥ कुत एतदेवमित्याह—

अमुख्यविषयो य. स्यादुक्तिभेदः सबाधक ।
हिंसाहिंसादिवद्यद्वा तत्त्वभेदव्यपाश्रयः ॥२८॥

'अमुख्यविषयो'ऽपरमार्थगोचरो, 'य. स्याद्'—भवेद्, 'उक्तिभेद —'शब्दप्रवृत्तिवैसदृश्यलक्षणः, 'स बाधको'—विरुद्ध. । दृष्टान्तमाह—'हिंसाहिंसादिवद्' —नित्यरूपेऽनित्यरूपे वैकान्तेनात्मनि हिंसावदहिंसावच्च, 'यद्वा'—अथवा तत्त्वभेदो—"द्रव्यगुणादिषट्तत्त्वरूप.," 'सत्त्वरजस्तमसा साम्यावस्था प्रकृति,

प्रकृतेर्महान्, महतोऽहङ्कार" इत्यादि पञ्चविंशतितत्त्वलक्षणो वा। स 'व्यपाश्रयो'ऽपेक्षणीयो यस्योक्तिभेदस्य तथा, यथा इति गम्यते ॥२८॥ एतदेव व्यतिरेकत आह—

> मुख्ये तु तत्र नैवासौ, बाधक. स्याद्विपश्चिताम्।
> हिंसादिविरतावर्थे यमव्रतगतो यथा ॥२९॥

'मुख्ये तु'—परिणामित्वादिधर्मभाज्यनुपचरिते पुन. 'तत्र' तत्त्व आत्मादौ 'नैवासौ' उक्तिभेदो 'बाधको'-विघटमानः, स्याद्विपश्चिता—मतिमताम्। दृष्टान्तमाह—हिंसादिविरतौ—हिंसानृतस्तेयादिविरमणरूपे अर्थे—पदार्थे 'यमव्रतगत' यमगत मारव्यानां व्रतगतो जैनानां संज्ञाभेद, यथा इति दृष्टान्तार्थः ॥२९॥

इत्थं योगगोचरादिकभिधाय साम्प्रतं प्रस्तुतमुपक्रम्यते—

> मुख्यतत्त्वानुवेधेन स्पष्टलिङ्गान्वितस्ततः।
> युक्त्यागमानुसारेण योगमार्गोऽभिधीयते ॥३०॥

मुख्यतत्त्वस्याऽऽत्मादेरनुपचरितस्य, अनुवेधेनाऽनुगमेन, स्पष्टलिङ्गान्वित – स्फुटलक्षणोपेतः, ततो—यत एवमनेकधा योगो वचनभेदात ततः कारणाद्, युक्त्यागमानुसारेण—अनुमानाप्तवचनानुवर्तनेन, योगमार्गो—योग एव निर्वाणपुरप्रापकतया मार्गो योगमार्ग, अभिधीयते—निरूप्यते, स्पष्टलिङ्गानि चात्रैव वक्ष्यमाणानि। यथा "किं चान्यद्योगत. स्थैर्यं, धैर्यश्रद्धा च जायते। मैत्री जनप्रियत्वं च, प्रातिभ तत्त्वभासनम् ॥१॥" (श्लोक. ५२) इत्यादि ॥३०॥ योगमार्गमेव भेदतोऽभिव्यनक्ति—

> अध्यात्मं भावना ध्यानं समता वृत्तिसक्षय.।
> मोक्षेण योजनाद्योग एष श्रेष्ठो यथोत्तरम् ॥३१॥

१—अध्यात्मं २—भावना ३—ध्यानं ४—समता ५—वृत्तिसक्षय.। किमित्याह 'मोक्षेण' सह 'योजनात्'—संयोगकरणात 'योग एष' उक्तभेद. 'श्रेष्ठो' भावरूपतया निरुपचरित. 'यथोत्तर'-यो यस्योत्तर इति ॥३१॥ तथा—

> तात्त्विकोऽतात्त्विकश्चाय सानुबन्धस्तथापर'।
> सास्रवोऽनास्रवश्चेति सज्ञाभेदेन कीर्तित ॥३२॥

'तात्त्विक.'–परमार्थभवः 'अतात्त्विकश्च' तदितर अयं-योग, सानुबन्धो–ऽनुबन्धवान् 'तथा' इति समुच्चये, 'अपरो'-निरनुबन्धः तथा 'सास्रवो'–दीर्घसंसारफलकर्मबन्धयुक्तः 'अनास्रवश्च' तदितरः, 'इति'–एवम् 'संज्ञाभेदेन' नामान्तररूपेण 'कीर्तितो'–निरूपितो योगशास्त्रकारैरेष योग इति ॥३२॥ अथैनमेव तात्त्विकादिभेदं व्याचष्टे—

तात्त्विको भूत एव स्यादन्यो लोकव्यपेक्षया।
अच्छिन्नः सानुबन्धस्तु छेदवानपरो मतः ॥३३॥

'तात्त्विको भूत एव' निर्वाणैकाभिलाषितया सद्भूत एव यः सः, 'स्याद् अन्यो' ऽतात्त्विक. सः यो 'लोकव्यपेक्षया' लोकचित्ताराधनरूपतया तथा 'अच्छिन्न' आमुक्तिप्राप्तेरत्रुटितो यः स, 'सानुबन्धस्तु' पुन. तथा 'छेदवान्'–छिन्नसन्तानो योग. 'अपरो'ऽसानुबन्धो मतो–मतिमतामिति ॥३३॥

सास्रवो दीर्घसंसारस्ततोऽन्योऽनास्रव पर।
अवस्थाभेदविषयाः संज्ञा एता यथोदिताः ॥३४॥

'सास्रवो' योग. क इत्याह 'दीर्घो भूयान्संसारो यत्र स दीर्घसंसारः' तत· सास्रवादन्यो विलक्षणोऽनास्रवो योगः 'पर.' प्रकृष्टः। ('अवस्थाभेदविषया·') अवस्थाभेदो विषयो गोचरो यासां तास्तथा 'संज्ञा' नामानि 'एता' अनन्तरनिरूपिता· 'यथोदिता'–यथार्था· ॥३४॥

अथ तद्योगभेदगतमेव किंचिदाह—

स्वरूपं सम्भवं चैव वक्ष्याम्यूर्ध्वमनुक्रमात्।
अमीषां योगभेदानां सम्यक्शास्त्रानुसारत· ॥३५॥

'स्वरूपं'–स्वलक्षणं तथा 'सम्भवं चैवो'त्पत्तिमेव च 'वक्ष्यामि'–भणिष्यामि 'ऊर्ध्वम्'–उपरि 'अनुक्रमात्'–परिपाट्या। 'अमीषाम्' अध्यात्मादीनां मेकादशानां योगभेदानाम्, कथमित्याह 'सम्यक्शास्त्रं'–जिनागमरूप तस्याऽनुसारतो–ऽनुसारेण ॥३५॥

इदानीं तु समासेन योगमाहात्म्यमुच्यते।
पूर्वसेवाक्रमश्चैव, प्रवृत्त्यङ्गतया सताम् ॥३६॥

'इदानीं तु'–सांप्रत पुनः समासेन–सक्षेपेण योगमाहात्म्य–योगसामर्थ्यलक्षणम् उच्यते–निरूप्यते। तथा 'पूर्वसेवाया'–योगस्यैव प्रथमभूमिकारूपाया गुरुदेवादिपूजादिलक्षणायाः 'क्रमश्चैव'–परिपाटिश्चोच्यते। कथमित्याह 'प्रवृत्त्यङ्गतया'–योगप्रवृत्तिहेतुत्वेन 'सता'–प्रेक्षावतामिति ॥३६॥

यथोद्देशं निर्देशाद्योगमाहात्म्यमेवाह—

योग· कल्पतरुः श्रेष्ठो योगश्चिन्तामणिः पर ।
योग. प्रधानं कर्माणा योग सिद्धे· स्वयंग्रहः ॥३७॥

'योग' उक्तनिरुक्त 'कल्पतरु.'–कल्पद्रुम. 'श्रेष्ठो'ऽन्यकल्पद्रुमेभ्योऽतिशायी। तथा योगश्चिन्तामणिः–चिन्तारत्नं 'पर.' प्रकृष्टः। 'योग· प्रधानं' वस्तु 'धर्माणा'–शेषधर्मस्थानानाम्। तथा 'योगः सिद्धेर्निर्वृतिलक्षणाया' स्वयंग्रहहेतुत्वात्–स्वयंग्रहः। अत्र पुनः पुनर्योगशब्दोपादानं, तदस्यात्यन्तमादरणीयताख्यापनार्थमिति ॥३७॥

तथा च जन्मबीजाग्निर्जरसोऽपि जरा परा।
दु खाना राजयक्ष्माऽयं मृत्योर्मृत्युरुदाहृतः ॥३८॥

'तथा च' इति समुच्चये, 'जन्मबीजाग्नि' पुन पुनर्जन्मकारणकर्मशक्तिभेदाहकारी। तथा 'जरसोऽपि'–जराया अपि 'जरा'–वयोहानिकारणत्वात् 'परा' प्रकृष्टा। तथा 'दु.खानां'–शारीरमानसबाधारूपाणां 'राजयक्ष्मा'–राजमान्द्यमिव 'क्षय' योग·। तथा 'मृत्यो':–अन्तकस्य 'मृत्युरुदाहृत' शास्त्रकारैर्निरूपितः ॥३८॥

कुण्ठीभवन्ति तीक्ष्णानि मन्मथास्त्राणि सर्वथा।
योगवर्मावृते चित्ते तपश्छिद्रकराण्यपि ॥३९॥

'कुण्ठीभवन्ति'-मन्दानि जायन्ते 'तीक्ष्णानि'–निशितानि 'मन्मथास्त्राणि' –कामशस्त्राणि शब्दादिविषयरूपाणि 'सर्वथा'–सर्वप्रकारैः। क्वेत्याह 'योगवर्मावृते'–योगसन्नाहवति 'चित्ते'–मनसि, कीदृशानीत्याह—तपश्छिद्रकराण्यपिमासक्षपणादितपोभ्रंशकारीण्यपि तथाविधयोगविकलानां तपस्विनामिति ॥३९॥

अक्षरद्वयमप्येतत् श्रूयमाणं विधानतः ।
गीतं पापक्षयायोच्चैर्योगसिद्धैर्महात्मभिः ॥४०॥

'अक्षरद्वयमपि' किं पुनः पञ्चनमस्कारादीन्यक्षराणीत्यपिशब्दार्थः । 'एतत्' योग इति शब्दलक्षणं 'श्रूयमाणम्'-आकर्ण्यमानम् तथाविधार्थानवबोधेऽपि 'विधानतो'-विधानेन श्रद्धासंवेगादिशुद्धभावोल्लासकरकुड्मलयोजनादिलक्षणेन । 'गीतम्'-उक्तं 'पापक्षयाय'-मिथ्यात्वमोहाद्यकुशलकर्मनिर्मूलनाय 'उच्चै.'-अत्यर्थम् । कैर्गीतमित्याह 'योगसिद्धै'-योगः सिद्धो निष्पन्नो येषां ते तथा, तैर्जिनगणधरादिभि. 'महात्मभिः'-प्रशस्तस्वभावैरिति ॥४०॥ तथा— ,

मलिनस्य यथा हेम्नो वह्नेः शुद्धिर्नियोगत. ।
योगाग्नेश्चेतसस्तद्वदविद्यामलिनात्मन' ॥४१॥

'मलिनस्य'—ताम्रादिमलबहुलस्य 'यथा' इति दृष्टान्तार्थ' 'हेम्नः'—सुवर्णस्य 'वह्ने.'—वैश्वानरात् 'शुद्धि.'—निर्मलता नियोगतो—नियोगे(यमे)न शुद्धिकारणानां स्वकार्याव्यभिचारात्, 'योगाग्ने':—योगवह्नेः 'चेतसो'—मनस. शुद्धि 'तद्वद्' हेमवद् कीदृशो मनस इत्याह 'अविद्यामलिनात्मनः' -सद्भूतवस्तुविषयभ्रान्तिवशाऽशुद्धीभूतस्वरूपस्येति ॥४१॥ तथा—

अमुत्र संशयापन्नचेतसोऽपि ह्यतो ध्रुवम् ।
सत्स्वप्नप्रत्ययादिभ्यः, संशयो विनिवर्तते ॥४२॥

'अमुत्र'—परलोकविषये 'संशयापन्नचेतसोऽपिहि'—भवान्तर समस्ति न वेति भ्रान्तमनस , किं पुनरन्यस्येत्यपिहीतिशब्दार्थः । 'अतो'—योगात् 'ध्रुवम्' -असंशयम् 'सत्स्वप्नप्रत्ययादिभ्य.'—सत्स्वप्नवन्निद्रायमाणावस्थायां स्वर्गादिभवान्तरदर्शनलक्षणाद्य. 'प्रत्यय.'—प्रतीतिर्भवान्तरस्य, आदिशब्दान्निजोहापोहतथाविधागमाभ्यासजन्यप्रत्ययग्रहस्तेभ्यः सकाशात् 'संशय'—सदेहो 'विनिवर्तत'—उपरमति । 'शुद्धसमाचारा हि साधव. सत्स्वप्नलाभेन निजोहापोहयोगेन सदागमाभ्यासेन च प्राक् संशयितमनसोऽपि व्यावर्तितविपर्यासहेतुमिथ्यात्वादिमोहोदया अभ्रकगृहान्तर्ज्वलितप्रदीपप्रभोदाहरणेन भवान्तर निर्णयन्त्ये-

नेति" ॥४२॥ न च वक्तव्य 'स्वप्नोऽपि कथं लभ्यते' इति यतः—

श्रद्धालेशान्नियोगेन बाह्ययोगवतोऽपि हि ।
शुक्लस्वप्ना भवन्तीष्टदेवतादर्शनादय. ॥४३॥

श्रद्धालेशाद्'-बहुमानांशाद् 'नियोगेन'-नियमेन 'बाह्ययोगवतोऽपि हि'-तथाविधोपयोगशून्यतया भावयोगानुरूपक्रियामात्रयुक्तस्य, किं पुनर्बाह्ययोगवत इत्यपिहीतिशब्दार्थ. । किमित्याह 'शुक्लस्वप्ना.'-अमलीमसा: स्वप्ना. भवन्ति-जायन्ते 'इष्टदेवतादर्शनादय.'-त्रिभुवनाराध्यजिनगुरुधार्मिकदर्शनादिलक्षणा' ॥४३॥ तथा—

देवान् गुरून् द्विजान् साधून् सत्कर्मस्था हि योगिनः।
प्रायः स्वप्ने प्रपश्यन्ति हृष्टान् सन्नोदनापरान् ॥४४॥

'देवान्'-आराध्यतमान् जिनादीन्, 'गुरून्'-धर्माचार्यादीन् मातापित्रादीन्वा 'द्विजान्'-लब्धदीक्षानामकद्वितीयजन्मनो मुनीन् 'साधून्'-शेषशिष्टलोकान् 'सत्कर्मस्था:'-स्वसिद्धान्ताऽविरुद्धक्रियास्थिता हि-प्राग्वत् 'योगिनो'-योगाभ्यासपरा. प्राणिन. किमित्याह 'प्राय'-बाहुल्येन 'स्वप्ने'-प्रतीनरूप एव 'प्रपश्यन्ति'-प्रेक्षन्ते 'हृष्टान्'-हर्षवत. तथा 'सन्नोदनापरान्' -शुद्धार्थविषयप्रेरणपरायणान् ॥४४। न चासौ भ्रान्तेति भावयन्नाह—

नोदनापि च सा यतो यथार्थैवोपजायते।
तथाकालादिभेदेन, हन्त नोपप्लवस्ततः ॥४५॥

'नोदनापि च' न केवलं देवतादर्शनादि 'सा' देवादिकृता यतो यस्मात्कारणाद् 'यथार्थैव'-सूचितप्रयोजनफलैव उपजायते। कथमित्याह 'तथाकालादिभेदेन'-तत्प्रकारकालक्षेत्रभावविशेषेण । 'हन्त' इति प्राग्वत्। 'न'-नैव 'उपप्लव.'-वातादिधातुविकारजनितश्चित्तसक्षोभो वर्तते प्रेरणा 'तत' -यथार्थत्वाद्धेतोः, न हि यथार्थफलभाज' अविसंवादिरूपत्वाल्लोक उपप्लवरूपता लभन्ते, किं तु सत्यरूपतामेवेति ॥४५॥ तथा—

स्वप्नमन्त्रप्रयोगाच्च सत्यः स्वप्नोऽभिजायते ।
विद्वज्जनेऽविगानेन सुप्रसिद्धमिदं तथा ॥४६॥

'स्वप्नमन्त्रप्रयोगाच्च'—स्वप्नमन्त्रः स्वप्नलाभफलो मन्त्रविशेषः तत्प्रयोगाच्चकाराच्छुद्धयोगाच्च 'सत्यः स्वप्नो'—यथार्थस्वप्नः 'अभिजायते'—आविर्भवति। एतदेव दृढीकुर्वन्नाह 'विद्वज्जने'—मतिमल्लोके 'अविगानेन'—अविप्रतिपत्त्या 'सुप्रसिद्ध'—अतीवख्यातिमागतं 'इद'—स्वप्नमन्त्रप्रयोगात्सत्य स्वप्नो जायत इत्येतत 'तथा'—तेन प्रकारेण ॥४६॥

न च भूतहेतुकोऽयं व्यवहार इति दर्शयति—

> न ह्येतद् भूतमात्रत्वनिमित्तं सङ्गतं वचः।
> अयोगिनः समध्यक्षं यन्नैवंविधगोचरम् ॥४७॥

'न हि'—नैव, एतदुक्तरूपं देवतादर्शनादि 'भूतमात्रत्वनिमित्तं'—भूतमात्रत्व=केवलभूतभाव एव निमित्तं हेतुर्यस्य तत्तथा इत्येवं परेण प्रवर्तमान 'सङ्गत'—घटमानक 'वचो'—वचनम्, 'एतत्स्वप्नदर्शनादि यत्किञ्चिद् भूतमात्रनिमित्तमित्युच्यते तदसङ्गत वच' इत्यर्थः। कुत इत्याह 'अयोगिन.'—अर्वाग्दर्शिनः प्रमातुः 'समध्यक्ष'—प्रत्यक्षं चाक्षुषादि 'यत्'—यस्मात् न—नैव 'एवंविधगोचर'—एवंविधः स्वप्नदर्शनादिरतीन्द्रियोऽर्थो भूतमात्रनिमित्तो न तु देवतानुग्रहमन्त्रप्रयोगादिनिमित्तक इत्यादिकोऽर्थो गोचरो विषयो यत्र तत्तथा। इदमुक्तं भवति—छद्मस्थस्य पृथिव्यादिरूपभूतमात्रपरिहारेणातीन्द्रिये देवतादावर्थे विधिप्रतिषेधयोः प्रत्यक्षमक्षममेव, तस्य तदविषयत्वादिति ॥४७॥

एतदेव भावयति—

> प्रलापमात्र च वचो यदप्रत्यक्षपूर्वकम्।
> यथेहाप्सरस. स्वर्गे मोक्षे चानन्द उत्तमः ॥४८॥

प्रलापमात्रम्—अनर्थकमेव 'चः' समुच्चये 'वचो'—वचनम्। कीदृशमित्याह—'यदप्रत्यक्षपूर्वकं'—प्रत्यक्षेणानुपलभ्य यद्भाषितम्, दृष्टान्तमाह—यथेह -मर्त्यलोके कश्चिद्वक्त्यसर्वज्ञवादी मीमांसकादि., अप्सरस.—मेनका-रम्भाद्याः 'स्वर्गे' सन्ति 'मोक्षे च'—मुक्तौ पुनः 'आनन्द.'—आह्लाद 'उत्तम'—सर्वातिशायी, साक्षाददृष्टे हि वाच्य अप्सरःप्रमुखे ब्रुवाणो मीमांसकादि प्रलापमात्रकार्येव स्यात्। एवं नास्तिकोऽप्यतीन्द्रियं देवतादिकं निह्नुवान इति ॥४८॥

अथैवमनवकाशीकृतः कदाचित्परलोकसंशयवादी मीमांसको वा ब्रूयाद्यथा—

योगिनो यत्समध्यक्षं ततश्चेदुक्तनिश्चयः ।
आत्मादेरपि युक्तोऽयं तत एवेति चिन्त्यताम् ॥४९॥

'योगिनो'–दिव्यदृशः प्रमातु, यत्समध्यक्षं–प्रत्यक्षज्ञान ततस्तत्समध्यक्षात् 'चेद्'–यदि उक्तनिश्चयोऽप्सरसः स्वर्गे, मोक्षे चानन्द इति प्रागुक्तार्थनिर्णयो जायते। एवं तर्हि 'आत्मादेरपि' अतीन्द्रियार्थस्य किं पुनः प्रस्तुतस्येत्यपि-शब्दार्थः। युक्तो घटमानोऽयं निश्चय' 'तत एव' योगिसमध्यक्षादेव 'इति' एतद् 'चिन्त्यता'–विमृश्यतामिति ॥४९॥ एतदेव भावयति—

अयोगिनो हि प्रत्यक्षगोचरातीतमप्यलम् ।
विजानात्येतदेवं च, बाधाऽत्रापि न विद्यते ॥५०॥

'अयोगिनो'ऽर्वाग्दृशः प्रमातुः 'हि'–यस्माद् 'प्रत्यक्षगोचरातीतमपि' ऐन्द्रियकाध्यक्षविषयभावातिक्रान्तमप्यात्मादिवस्तु किं पुनरितररूपमित्यपि-शब्दार्थ', 'अलम्'–अत्यर्थं हस्ततलन्यस्तनिस्तलस्थूलमुक्ताफलावलोकनोदाह-रणेन 'विजानाति'–प्रेक्षते, एतद्—योगिसमध्यक्षं दिव्यदर्शनत्वात्तस्य। यदि नामैव ततः किं सिद्धमित्याह 'एवं च'–अस्मिश्च प्रकारे सति, 'बाधा'–अघ-टनालक्षणा 'अत्रापि'–आत्मादिनिश्चये न केवलमप्सरःप्रभृतावर्थे इत्यपिश-ब्दार्थे 'न विद्यते'–नास्ति ॥५०॥

इत्थमागमगम्यत्वमभिधायाऽधुनानुमानविषयत्वमाह—

आत्माद्यतीन्द्रियं वस्तु, योगिप्रत्यक्षभावत ।
परोक्षमपि चान्येषा, न हि युक्त्या न युज्यते ॥५१॥

'आत्मादि'–आत्मकर्मसर्वज्ञादि 'अतीन्द्रियम्'–इन्द्रियविषयभावातीत वस्तु, 'न हि न युज्यते' इत्युत्तरेण योगः। किंदृशमित्याह 'योगिप्रत्यक्षभा-वत'–सर्वज्ञज्ञानविषयभावेन 'परोक्षमपि च' इन्द्रियज्ञानाऽगोचरमपि किं पुनरपरोक्षमित्यपिशब्दार्थः। 'अन्येषा'–अस्मादृशामर्वाग्दृशा, 'न हि'–नैव 'युक्त्या'–शुद्धहेतुप्रयोगरूपया 'न युज्यते' किं तु युज्यत एव। तत्र युक्ति—

"अचेतनानि भूतानि, न तद्धर्मो न तत्फलम् ॥
चेतनास्ति च यस्येयं, स एवात्मेति बुध्यताम् ॥३१॥

यदीय भूतधर्मः स्यात्प्रत्येकं तेषु सर्वदा ॥
उपलभ्येत सत्त्वादि–कठिनत्वादयो यथा ॥३२॥

काठिन्यादिस्वभावानि, भूतान्यध्यक्षसिद्धितः ॥
चेतना तु न तद्रूपा, सा कथं तत्फलं भवेत् ॥३३॥" [शा०वा०स०] इत्यादि ॥

"तुल्यप्रतापोद्यमसाहसानां केचिल्लभन्ते निजकार्यसिद्धिम् ।
परे न तामत्र निगद्यता मे, कर्मास्ति हित्वा यदि कोऽपि हेतु ॥१॥

विचित्रदेहाकृति-वर्ण-गन्ध-प्रभाव-जातिप्रभवस्वभावाः ।
केन क्रियन्ते भुवनेऽङ्गिवर्गाश्चिरन्तनं कर्म निरस्य चित्राः ॥२॥

विवर्ध्य मासान्नव गर्भमध्ये, बहुप्रकारैः कललादिभावैः ।
उद्वर्त्य निष्कासयते सवित्र्याः, को गर्भतः कर्म विहाय पूर्वम् ॥३॥" इत्यादिः॥

"वीतरागोऽस्ति सर्वज्ञः, प्रमाणाऽबाधितत्वतः ।
सर्वदा विदितः सद्भिः सुखादिकमिव ध्रुवम् ॥१॥

क्षीयते सर्वथा रागः, क्वापि कारणहानितः ।
ज्वलनो हीयते किं न, काष्ठादीनां वियोगतः ॥२॥

प्रकर्षस्य प्रतिष्ठानं, ज्ञानं क्वापि प्रपद्यते । परिमाणमिवाकाशे, तारतम्योपलब्धितः ॥३॥" इत्यादि ॥५१॥ अत्रैवाभ्युच्चयमाह—

किं चान्यद्योगतः स्थैर्यं धैर्यं श्रद्धा च जायते ।
मैत्री जनप्रियत्वं च, प्रातिभं तत्त्वभासनम् ॥५२॥

'कि च' इत्यभ्युच्चये 'अन्यत्–प्रगुक्ताद्विलक्षणं योगफलमस्ति, तदेव दर्शयति 'योगतो'–योगात् 'स्थैर्यं'–स्थिरभावः प्रतिपन्ननिर्वाहणे, 'धैर्यं'–व्यसनाशनिसन्निपातेऽप्यविचलितप्रकृतिभावः 'श्रद्धा च' रुचिस्तत्त्वमार्गानुगा 'जायते'–आविर्भवति । 'मैत्री'–सर्वसत्त्वेषु मित्रभावः 'जनप्रियत्वं च'—

–शिष्टलोकवल्लभभाव. 'प्रातिभं'–सहजप्रतिभाप्रभवम् 'तत्त्वभासनं' जीवादितत्त्वावलोकन भवतीति ॥५२॥ तथा—

विनिवृत्ताऽऽग्रहत्वं च, तथा द्वन्द्वसहिष्णुता ।
तदभावश्च लाभश्च, बाह्यानां कालसङ्गतः ॥५३॥

'विनिवृत्ताग्रहत्व च'–निर्मुक्तानुचितार्थाभिनिवेशित्वं च, 'तथा द्वन्द्वसहिष्णुता' निरुपक्रमक्लिष्टकर्मोदयापादितानामिष्टवियोगानिष्टसम्प्रयोगादीना व्यसनाना सम्यक्सहनभावः 'तदभावश्च'–द्वन्द्वविनाशश्च प्रायः परिशुद्धयोगोपहननशक्तिकत्वात् द्वन्द्वसम्पादकापायानाम् 'लाभश्च'–प्राप्तिश्च 'बाह्यानां'–निर्वाहादीना समाधिहेतूनाम् 'कालसङ्गतो'–यो यत्र काले योग्य इति ॥५३॥ तथा—

धृतिः क्षमा सदाचारो, योगवृद्धि शुभोदया ।
आदेयता गुरुत्वं च, शमसौख्यमनुत्तरम् ॥५४॥

धृतिर्येन केनचिद्वसनभोजनादिना निर्वाहमात्रनिमित्तेन सन्तोष. 'क्षमा'–सत्येतरदोषश्रवणेन कार्यतत्त्वमविचार्यान्तर्बहिश्च कोपोदयाद्विक्रियामापाद्यमानस्यात्मनो निरोधनम् 'सदाचार.'–सर्वोपकारप्रियवचनाकृत्रिमोचितस्नेहादिका सज्जनचेष्टा । 'योगवृद्धि.'–सम्यग्दर्शनादिमुक्तिबीजोत्कर्षरूपा 'शुभोदया'–प्रशस्तफलोद्गमहेतु', धृत्यादेः प्रत्येकविशेषणमेतत् । 'आदेयता'–परैरादरणीयवचनचेष्टनरूपा । 'गुरुत्वं च'–सर्वत्र गौरवलाभलक्षणम् । तथा 'शमसौख्यम्'–अतिमन्दीभूतकषायविषदोषतया प्रशमशर्म । 'अनुत्तर' –विषयसेवाजनितानन्दातिशायि । यत. पठ्यते [प्र० रतौ]-'निर्जितमदमदनाना, वाक्कायमनोविकाररहितानाम् ॥ विनिवृत्तपराशानामिहैव मोक्ष. सुविहितानाम् ॥२३८॥' इति । अत्र च श्लोकत्रये चकारास्तथाशब्दश्च समुच्चयार्थो ॥५४॥

आविद्वदङ्गनासिद्धमिदानीमपि दृश्यते ।
एतत्प्रायस्तदन्यत्तु, सुबह्वागमभाषितम् ॥५५॥

'आविद्वदङ्गनासिद्धम्,–आविद्वद्भ्य आ अङ्गनाभ्यश्च यो लोकस्तस्येत्यर्थ., 'सिद्ध'–प्रतीतम् 'इदानीमपि'–दुःषमायां किं पुनः सुषमदुःषमादा-

वित्यपिशब्दार्थः 'दृश्यते'ऽवलोक्यते 'एतत्-प्रगुक्तं योगफलम् 'प्रायो' -बाहुल्येन, 'तदन्यत्तु'-उक्तादन्यत्पुनर्योगफलम् 'सुबहु'-अतिभूरि आमर्षौषध्यादिकर्द्धिप्राप्तिरूपम् 'आगमभाषितम्'-आवश्यकनिर्युक्त्यादिनिरूपितम् ॥ यदुक्त तत्र-'आमोसहिविप्पोसहि-खेलोसहिजल्लमोसहि चेव।

संभिन्नसोयउज्जुमई, सव्वोसही चेव बोधव्वा ॥१॥
चारणआसीविसकेवली य, मणणाणिणो य पुव्वधरा ।
अरहन्तचक्कवट्टी, बलदेवा वासुदेवाय य ॥२॥'
तथा-*"अलौल्यमारोग्यमनिष्ठुरत्व, गन्धः शुभो मूत्रपुरीषमल्पम् ॥
कान्ति. प्रसाद. स्वरसौम्यता च, योगप्रवृत्ते प्रथम हि लिङ्गम् ॥१॥
मैत्र्यादियुक्तं विषयेषु चेत , प्रभाववद्धैर्यममन्वितं च ।
द्वन्द्वैरधृष्यत्वमभीष्टलाभो, जनप्रियत्व च तथा पर स्यात् ॥२॥
दोषव्यपायः परमा च तृप्तिरौचित्ययोग समता च गुर्वी ॥
वैरादिनाशोऽथ ऋतम्भरा धीर्निष्पन्नयोगस्य तु चिह्नमेतत् ॥३॥"॥५५॥
अथोक्तादेव योगफलात्तत्त्वान्तरप्रसिद्ध्यर्थमाह—

न चैतद् भूतसङ्घातमात्रादेवोपपद्यते ।
तदन्यभेदकाभावे, तद्वैचित्र्याऽप्रसिद्धितः ॥५६॥

'न च'-नैव 'एतद्'-योगमाहात्म्य भावयोगिपूपलभ्यमानम् 'भूतसङ्घातमात्रादेव'-पृथ्व्यादिमहाभूतसङ्घातात् केवलादात्मादिरूपतत्त्वान्तरशून्याद 'उपपद्यते'-घटते । कुत इत्याह 'तदन्यभेदकाभावे'-तस्माद् भूतसङ्घाताद्यदन्यत्तत्त्वान्तरमात्मादिलक्षण भेदकं विशेषकारि तस्याभावे 'तद्वैचित्र्याऽप्रसिद्धित.' तेषां भूतसङ्घाताना कायाकारपरिणतानामपि वैचित्र्यस्य नानात्वस्य योगमाहात्म्ययुक्तत्वेतरलक्षणस्याऽप्रसिद्धेरघटनात , अतो बलादनुमिमीमहे भूतसङ्घातातिरिक्तं विचित्रशक्तिसङ्गतं तत्त्वान्तर समस्ति यद्वशादयं योगमाहात्म्यभावाभावलक्षणो भेद सम्पद्यते ॥५६॥

अथ योगमाहात्म्यादेव प्रकारान्तरेण परलोकसिद्धिमाह—

---

*एतास्तिस्रो गाथा. योगदृष्टावपि पृष्ठ ११४ मध्ये सन्ति ।

ब्रह्मचर्येण तपसा, सद्वेदाध्ययनेन च।
विद्यामन्त्रविशेषेण, सत्तीर्थासेवनेन च ॥५७॥

'ब्रह्मचर्येण'-भावतो बस्तिनिरोधरूपेण, 'तपसा'-उपवासादिना 'सद्वेदाध्ययनेन च', सदा-सुन्दरेणात्मानुग्रहादिपरिणामयुक्ततया, वेदस्य-सद्भूतार्थागमस्याध्ययनेन वाचनापृच्छनादिस्वभावेन। चः समुच्चये। 'विद्यामन्त्रविशेषेण'-ससाधना स्त्रीस्वामिका वा विद्या, मन्त्रश्च तदितररूपः, ततो मन्त्रव्याकरणप्रसिद्धयोर्विद्यामन्त्रयोर्विशेषेण भेदेन 'सत्तीर्थासेवनेन च' सतः सातिशयस्य व्यसनसलिलनिधिनिस्तारणोपायस्य स्थावरजङ्गमभेदभिन्नस्य तीर्थस्यासेवनेन पर्युपासनेन। च. प्राग्वत् ॥५७॥ तथा—

पित्रोः सम्यगुपस्थानाद्, ग्लानभैषज्यदानतः।
देवादिशोधनाच्चैव, भवेज्जातिस्मरः पुमान् ॥५८॥

'पित्रोः'-जननीजनकयोः 'सम्यग्'-यथावद्, 'उपस्थानात्'-त्रिसन्ध्यप्रणामादिविनयरूपात्, 'पूजनं चास्य विज्ञेयं, त्रिसन्ध्यं नमनक्रिया' (श्लो.-१११) इत्यादिवक्ष्यमाणात्, 'ग्लानभैषज्यदानतो'-ग्लानानां=ज्वरादिरोगोपहतशरीरशक्तीनां भैषज्यस्य-औषधस्य दानतो-वितरणात् 'देवादिशोधनाच्चैव'-देवदेवस्थानपुस्तकसाधूपाश्रयादेर्धर्मकार्योपयोगिनः शोधनात्तथाविधमलापनयनेन निर्मलीकरणाद्, 'भवेत्'-जायेत 'जातिस्मरोऽनुभूतभवस्मर्ता 'पुमान् प्राणी, ब्रह्मचर्यादीनां योगविशेषाणां ज्ञानावरणह्रासान्तरङ्गकारणत्वात् ॥५८॥ अत्रैव प्रसङ्गसिद्धिमाह—

अत एव न सर्वेषामेतदागमनेऽपि हि।
परलोकाद्यथैकस्मात्स्थानात्तनुभृतामिति ॥५९॥

'अत एव'-ब्रह्मचर्यादेर्जातिस्मरणहेतुत्वादेव, न-नैव, सर्वेषां-देहिनाम्। एतद्-जातिस्मरणम्, 'आगमनेऽपिहि'-आगतावपि किं पुनर्लोकायतमतेन तदभाव इत्यपिहिशब्दार्थः। 'परलोकात्' परभवात् 'यथा'- इति दृष्टान्तार्थे, एकस्मात्स्थानात्पाटलिपुत्रकादेरागमनेऽपि 'तनुभृतां'-तत्रानुभूतार्थस्मरणम् 'इति' वाक्यपरिसमाप्तौ। इदमुक्तं भवति-यथैकस्मात्पाटलिपुत्र-

कादे. स्थानादागतानामपि सुबहूना पथिकानां क्वचिद्विवक्षिते स्थाने न सर्वेषां प्रागनुभूतार्थस्मृतिरुपजायते किन्तु केषाञ्चिदेव, एवं भवान्तरस्मृतावपि योजना कार्येति। न चाल्पबहुत्वेन स्मर्तॄणां दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमुद्भावनीय, स्मर्तृसम्भवमात्रस्य प्रतिपादयितुमिष्टत्वाद् दृष्टान्वदार्ष्टान्तिकयोः सर्वथा साधर्म्याभावाच्च ॥५९॥ एतदेव भावयन्नाह—

> न चैतेषामपि ह्येतदुन्मादग्रहयोगतः ।
> सर्वेषामनुभूतार्थस्मरण स्याद्विशेषतः ॥६०॥

'न च'—नैव 'एतेषामपि'--एकस्थानादागतानां, किं पुनर्भवान्तरादागतानामपीत्यपिशब्दार्थः 'हि'यस्माद् 'एतद्'-इदम् 'उन्मादग्रहयोगतः'-उन्मादो मोहावेशो, ग्रहश्च भूतावेशस्तत उन्मादग्रहयोर्योग. सम्बन्धस्तस्मात् 'सर्वेषां,-समस्तानाम् किमित्याह—अनुभूतार्थस्मरण 'स्यात्'--भवेत्, 'विषेशत.'-सर्वान्विशेषान्प्रतीत्य, किन्तु सामान्येनैव ॥६०॥

अथ दार्ष्टान्तिके सर्वेषां सामान्येन स्मृतिर्यथा स्यात्तथाह—

> सामान्येन तु सर्वेषा, स्तनवृत्त्यादिचिह्नितम् ।
> अभ्यासातिशयात्स्वप्नवृत्तितुल्यं व्यवस्थितम् ॥६१॥

'सामान्येन'-साधारणतया 'तु.' विशेषणार्थः 'सर्वेषां'-समस्तानां प्राणिनाम् 'स्तनवृत्त्यादिचिह्नितं'-स्तनवृत्तिस्तदहर्जातानां स्तनपानरूपा आदिशब्दाद्रमणीयरूपकन्दुकाद्यवलोकनकुतूहलादिका विविधा चेष्टा गृह्यते तया चिह्नितं व्यक्तिभावमानीतम् 'जातिस्मरणं' इति गम्यते । कीदृशमित्याह 'अभ्यासातिशयात्' — पुनःपुनरासेवनमभ्यासस्तस्यातिशय उत्कर्षस्तस्मात् 'स्वप्नवृत्तितुल्यं'—स्वप्नकालोपलभ्यमानदिवसानुभूतवनदेवकुलादिविहारादि-व्यवहारसमम् 'व्यवस्थितं'-प्रतिष्ठितम् । यथाभ्यासातिशयात्स्वप्ने दिनानुभूतोऽर्थ उपलभ्यते, एवं स्तनवृत्त्यादिको व्यवहार. प्राग्भवानुभूतो भवान्तर इति ॥६१॥ ननु स्वप्नवृत्ति पश्चादपि स्मर्यते न त्वेवं स्तनादिवृत्तिर्भवान्तरसम्बन्धिनीह स्मर्यत इति कथमनयोर्दृष्टान्तदार्ष्टान्तिकभाव इत्याशंक्याह—

स्वप्ने वृत्तिस्तथाभ्यासाद्विशिष्टस्मृतिवर्जिता ।
जाग्रतोऽपि क्वचित्सिद्धा, सूक्ष्मबुद्ध्या निरूप्यताम् ॥६२॥

'स्वप्ने वृत्ति'--उक्तरूपा 'तथाभ्यासात्'-तत्प्रकारादभ्यासात्, मन्दाभ्यासादित्यर्थ 'विशिष्टस्मृतिवर्जिता' स्फुटप्रतिभासरूपस्मरणरहिता 'क्वचित्सिद्धा' इत्युत्तरेण योग । तथा 'जाग्रतोऽपि'--क्षीणनिद्रस्य कस्यचित्न्वि पुनरन्यस्येति, 'क्वचित् क्षेत्रे काले वा' 'सिद्धा'--परलोकसमत्या प्रतिष्ठिता वृत्तिः--गच्छत्तृणस्पर्शादिका तथाभ्यासादेव स्मृतिवर्जिता । एतदर्थप्रतीताबुपदेशमाह 'सूक्ष्मबुद्ध्या'--परिभाव्यतामेतत् अन्यथोक्तस्याप्यर्थस्य सम्यगवगमाभावात ॥६२॥

अथ प्रकारान्तरत एव जातिस्मरणादात्मसिद्धि-मभिधित्सुराह—

श्रूयन्ते च 'महात्मान एते दृश्यन्त' इत्यपि ।
क्वचित्संवादिनस्तस्मादात्मादेर्हन्त निश्चय. ॥६३॥

'श्रूयन्ते'--समाकर्ण्यन्ते कथानकेषु भरुकच्छादौ शकुनिकार्जितराजपुत्रीसुदर्शनादय, चकारो हेत्वन्तरसमुच्चये, 'महात्मान.' प्रशस्तस्वभावा । 'एते'--जातिस्मरका. 'दृश्यन्त इत्यपि' दृश्यन्ते साक्षादेव क्वचिदिदानीमप्युपलभ्यन्ते । कीदृशा इत्याह 'संवादिन'--विसंवादविकलवचना. । तत किमित्याह 'तस्मात्'--जातिस्मरकादिसंवादात्, 'आत्मादे.--जीवकर्मादेरतीन्द्रियस्यापि कस्यचित 'हन्त' इति कोमलामन्त्रणे 'निश्चय.' सम्पद्यत इति ॥६३॥ अथ निगमयन्नाह—

एवं च तत्त्वसंसिद्धेर्योग एव निबन्धनम् ।
अतो यन्निश्चितैवेयं, नान्यतस्त्वीदृशी क्वचित् ॥६४॥

'एवं च'--उक्तन्यायेनैव 'तत्त्वसंसिद्धे'.--आत्मादृष्टादिप्रतीते. 'योग एव' नापरं किञ्चिद्, 'निबन्धनं'--हेतुर्वर्तते । एतदपि कुत इत्याह 'अत'--योगात् 'यत्'--यस्मात 'निश्चितैव'--अविपर्यासवत्येव 'इयं'--तत्त्वसिद्धि स्यात्, न--नैव 'अन्यत'--अन्यस्माद्वादप्रतिवादादे 'तु' पुनरर्थे, 'ईदृशी'--निश्चितरूपा तत्त्वसंसिद्धि 'क्वचित्' क्षेत्रादौ ॥६४॥

अतोऽत्रैव महान् यत्नस्तत्तत्त्वप्रसिद्धये ।
प्रेक्षावता सदा कार्यो, वादग्रन्थास्त्वकारणम् ॥६५॥

'अतो'-ऽस्मात्कारणात् 'अत्रैव' योगे 'महान्'-अन्योपायातिशायी 'यत्न' आदरः, तस्य 'तत्त्वस्य'-स्वर्गनरकादेः, 'प्रसिद्धये'-प्रतीत्यर्थम् 'प्रेक्षावता' -बुद्धिमता 'सदा'-सर्वकालम् 'कार्यो,-विधेयः । उपायान्तरप्रतिषेधमाह 'वादग्रन्थाः',-परपक्षनिराकरणेन स्वपक्षप्रतिष्ठापनानि तर्कप्रकरणानि 'तुः' प्राग्वत् 'अकारणं'-तत्त्वप्रतीतेरहेतवः । एतदेव समर्थयमान आह—

उक्तं च योगमार्गज्ञैस्तपोनिर्धूतकल्मषैः ।
भावियोगिहितायोच्चैर्मोहदीपसमं वचः ॥६६॥

'उक्तं च'-निरूपितं पुनः 'योगमार्गज्ञैः'-अध्यात्मविद्भिः पतञ्जलिप्रभृतिभिः, 'तपोनिर्धूतकल्मषैः'-प्रशमप्रधानेन तमसा क्षीणप्रायमार्गानुसारिबोधबाधकमोहमलैः । 'भावियोगिहिताय'-भविष्यद्विवादबहुलकलिकालयोगिहितार्थम् 'उच्चैः'-अत्यर्थम् 'मोहदीपसमं-'मतिमोहान्धकारप्रदीपस्थानीयम् 'वचो'-वचनम् ॥६६॥ एतदेव दर्शयति—

वादांश्च प्रतिवादांश्च, वदन्तो निश्चितांस्तथा ।
तत्त्वान्तं नैव गच्छन्ति, तिलपीलकवद्गतौ ॥६७॥

'वादांश्च'-पूर्वपक्षरूपान् 'प्रतिवादांश्च'-परोपन्यस्तपक्षप्रतिवचनरूपान् चौ-समुच्चये 'वदन्तो'-ब्रुवाणाः 'निश्चितान्'-असिद्धानैकान्तिकादिहेतुदोषपरिहारेण । 'तथा'-तेन प्रकारेण तत्तच्छास्त्र (तदवस्थासु) प्रसिद्धेन सर्वेऽपि दर्शनिनो मुमुक्षवोऽपि । किमित्याह 'तत्त्वान्त' आत्मादितत्त्वप्रसिद्धिरूपं' नैव गच्छन्ति प्रतिपद्यन्ते, 'तिलपीलकवत्'-निरुद्धाक्षसंचारतिलयन्त्रवाहननियुक्तकगोमहिषादिवद् 'गतौ'—वहनरूपायां सत्यामिति । यथासौ तिलपीलको गवादिर्निरुद्धाक्षतया नित्यं भ्राम्यन्नपि न तत्परिमाणमवबुध्यते, एवमेतेऽपि वादिनः स्वपक्षाभिनिवेशान्धा विचित्रं वदन्तोऽपि नोच्यमानतत्त्वं प्रतिपद्यन्त इति ॥६७॥ तर्हि कस्तत्र प्रतिपत्त्युपाय इत्याशंक्याह—

अध्यात्ममत्र परम उपाय परिकीर्तितः ।
गतौ सन्मार्गगमनं, यथैव ह्यप्रमादिन. ॥६८॥

'अध्यात्मं'—वक्ष्यमाणरूपम् अत्र—तत्त्वप्रतिपत्तौ 'परमः'—प्रकृष्टः । उपायो —हेतु. । 'परिकीर्तित.'—प्रज्ञप्त । दृष्टान्तमाह—'गतौ'—विशिष्टनगरप्राप्तौ 'सन्मार्गगमनं'—सताऽविसंवादकेन मार्गेण पथा गमनम् 'यथैव' इति दृष्टान्तार्थ. 'हि'—स्फुटम् 'अप्रमादिन.'गन्तुरुपाय इति ॥६८॥

एवं सति यद्विधेयं तदाह—

मुक्त्वाऽतो वादसङ्घट्टमध्यात्ममनुचिन्त्यताम् ।
नाविधूते तमःस्कन्धे ज्ञेये ज्ञानं प्रवर्तते ॥६९॥

मुक्त्वा—प्रोज्झ्य अतोऽध्यात्मस्यैव तत्त्वप्रतिपत्त्युपायत्वाद्धेतो. वादसङ्घट्टं —सभ्यसभापतिनिरूपणेन वादप्रतिवादरूपम् अध्यात्ममनुचिन्त्यताम् । कुत ? यतो न—नैव, अविधूते—ऽनिर्धाटिते, तम.स्कन्धे—मिथ्यात्वाभिनिवेशाद्यन्धकार प्रबन्धे—ऽध्यात्मानुचिन्तनदीपेन ज्ञेये—आत्मादौ ज्ञानं—प्रतीतिरूपं प्रवर्तते—मञ्जायत इति ॥६९॥ एतदेव भावयन्नाह—

सदुपायाद्यथैवाप्तिरुपेयस्य तथैव हि ।
नेतरस्मादिति प्राज्ञ, सदुपायपरो भवेत् ॥७०॥

सदुपायाद्—उपायाभासपरिहारेण सामान्येन सम्यगुपायात् 'यथैव' इति दृष्टान्तार्थे 'आप्ति'—उपलम्भ उपेयस्य—साध्यस्य 'तथैव हि' सदुपायादेव न—नैव इतरस्माद्—असदुपायात् इति—अस्माद्धेतोः 'प्राज्ञो'— युक्तायुक्तविभागज्ञ पुमान् 'सदुपायपर.'—सर्वत्र विमृश्य सम्यगुपायपरायणो भवेद्—जायेत अन्यथा प्राज्ञतैव न स्यात् ॥७०॥ अथ प्रस्तुतमेवाधिकृत्याह—

सदुपायश्च नाध्यात्मादन्य सन्दर्शितो बुधै. ।
दुरापं किन्त्वदोऽपीह, भवाब्धौ सुष्ठु देहिनाम् ॥७१॥

'सदुपायश्च'—सम्यगुपायः पुन. 'नाध्यात्मादन्यो' विलक्षण. 'सन्दर्शितो' —निरूपित बुधै.-पूर्वशास्त्रकारैस्तत्त्वप्रतीताविति दुराप—दुर्लभम् किन्तु—किं पुन 'अदोऽपि'—अध्यात्ममपि किं पुनस्तत्त्वप्रतीतिरित्यपिशब्दार्थ. इह

भवाब्धौ'-भवसमुद्रे सुष्ठु-अतिशयेन देहिनां-जन्तूनामिति ॥७१॥

अध्यात्मदुरापत्वमेव भावयति—

चरमे पुद्गलावर्ते, यतो य. शुक्लपाक्षिक ।
भिन्नग्रन्थिश्चरित्री च तस्यैवैतदुदाहृतम् ॥७२॥

चरमे-पर्यन्तवर्तिनि पुद्गलावर्ते-द्रव्यत. सामान्येन सर्वपुद्गलग्रहणोज्झनरूपे प्रवृत्ते सति यतो-यस्मात् यः-कश्चिद्भव्यविशेष, तत्रापि शुक्लपाक्षिको-ऽपार्धपुद्गलावर्तान्तर्गतससारः । यत उक्तम्-"जेसि अवड्ढो पोग्गलपरियट्टो सेसओ उ ससारो। ते सुक्कपक्खिया खलु, अहिगे पुण किण्हपक्खि त्ति ॥१॥" तत्रापि-'भिन्नग्रन्थि.'-अपूर्वकरणवज्रप्रहारविदारितघनरागद्वेषमोहपरिणामः, तत्रापि 'चरित्री'-देशत. सर्वतो वा सावद्याचारनिवृत्तः 'च.' प्राग्वत्। 'तस्यैव'-नान्यस्य एवदध्यात्मम् उदाहृतम्-उक्तमिति ॥७२॥ अथ कथमन्यथा न भवतीत्याशंक्याह—

प्रदीर्घभवसद्भावाद् मालिन्यातिशयात्तथा ।
अतत्त्वाभिनिवेशाच्च, नान्येष्वन्यस्य जातुचित् ॥७३॥

प्रदीर्घभवसद्भावात्-प्रदीर्घस्यातिद्राघीयसो भवस्य संसारस्य सद्भावात्-सभवात् 'मालिन्यातिशयात्तथा'-भव्यत्वापरिपाकलक्षणात् 'तथा' इति हेत्वन्तरसमुच्चये 'अतत्त्वाभिनिवेशाद्-विपरीतवस्तुस्वभावात्यन्ताऽऽग्रहात् 'च' प्राग्वत् 'नान्येषु'-पुद्गलावर्तेषु, चरमेऽपि नान्यस्योक्तगुणविकलस्य भव्यस्यापि जातुचित्-कदाचिदपि ॥७३॥ चरमे पुद्गलावर्त इत्युक्तम् अथान्येऽपि किं ते सन्तीत्याशक्याह—

अनादिरेष ससारी, नानागतिसमाश्रयः ।
पुद्गलाना परावर्ता, अत्रानन्तास्तथा गता ॥७४॥

अनादिरविद्यमानमूलारम्भ. 'एष' प्रत्यक्षतो दृश्यमान 'ससारो'-भवः कीदृग इत्याह 'नानागतिसमाश्रयः' नरकादिविचित्रपर्यायपात्रं वर्तते। ततश्च 'पुद्गलानाम्'-औदारिकादिवर्गणारूपाणा सर्वेषां, 'परावर्त्ता' ग्रहणमोक्षात्मका 'अत्र' ससारे 'अनन्ता'-अनन्तवारस्वभावा. 'तथा'-तेन समयप्रसिद्धप्रकारेण

'गता'–अतीताः ॥७५॥ केषामित्याह—

सर्वेषामेव सत्त्वाना, तत्स्वाभाव्यनियोगत' ।
नान्यथा सविदेतेषा, सूक्ष्मबुद्धया विभाव्यताम् ॥७५॥

सर्वेषामेव 'सत्त्वानां'–प्राणिनाम् तत्स्वाभाव्यमनन्तपुद्गलपरावर्तपरिभ्रमणस्वभावता, तस्य 'नियोगो'–व्यापारस्तस्मात्, अत्रैव व्यतिरेकमाह न–नैव 'अन्यथा'–तत्स्वाभाव्यनियोगमन्तरेण 'संविद्' अवबोधो घटते एतेषा अनन्तपुद्गलपरावर्तानाम् 'सूक्ष्मबुद्धया'–निपुणाभोगेन 'विभाव्यतां' अनुचिन्त्यतामेतत् ॥७५॥ एतदेव भावयति—

यादृच्छिकं न यत्कार्यं, कदाचिज्जायते क्वचित् ।
सत्त्वपुद्गलयोगश्च, तथा कार्यमिति स्थितम् ॥७६॥

'यादृच्छिक'–यदृच्छानिमित्तम् न–नैव यद्यस्मात् कार्यं कदाचित्कुत्रापि काले 'जायते' भवति क्वचित्क्षेत्रे, इत्थं सामान्येन कारणपूर्वकत्वं कार्यस्य प्रसाध्य प्रस्तुते योजयन्नाह–'सत्त्वपुद्गलयोगश्च तथा कार्यं' इति । तथा च सत्त्वपुद्गलयोगो–जीवपुद्गलसम्बन्धः कार्यं, ततोऽनुमीयतेऽस्या किञ्चित्कारणम्, यच्च तत्कारणं तन्नियमाज्जीवतत्स्वाभाव्यनियोगमन्तरेण नान्यदुपपद्यते, 'इति स्थितं' एवं प्रतिष्ठितं तत्स्वाभाव्यनियोगनिमित्तत्व पुद्गलपरावर्तानामिति ॥७६॥ अथ तत्स्वाभाव्यस्यैव वैचित्र्यं साधयन्नाह

चित्रस्यास्य तथाभावे, तत्स्वाभाव्यादृते परः ।
न कश्चिद्धेतुरेवं च, तदेव हि तथेष्यताम् ॥७७॥

चित्रस्य–कस्यचिज्जन्तोः कियत्सख्यारूपतया विचित्ररूपभाजः, अस्यानन्तपुद्गलपरावर्तरूपकार्यस्य तथा–देशकालनियमेन भावे—सम्भवे तत्स्वाभाव्यादृते—तत्स्वाभाव्यमन्तरेण परो—विलक्षणः न—नैव कश्चिद्धेतु., एवं च–अनेन च कार्यवैचित्र्यप्रकारेण 'तदेव हि' तत्स्वाभाव्यमेव तथा-विचित्रतया, इष्यताम्—अङ्गीक्रियतामिति ॥७७॥

अत्रैव परमतमाशंक्य परिहरन्नाह—

स्वभाववादापत्तिश्चेदत्र को दोष उच्यताम् ।
तदन्यवादाभावश्चेन्न तदन्याऽनपोहनात् ॥७८॥

स्वभाववादापत्तिः "कः कण्टकानां प्रकरोति तैक्ष्ण्यं, विचित्रभावं मृगपक्षिणां च । स्वभावतः सर्वमिदं प्रवृत्तं, न कामचारोऽस्ति कुतः प्रयत्नः ॥बुद्ध च. ९।६२॥" एवंलक्षणो यः स्वभाववादस्तस्यापत्तिः प्रसङ्गस्तत्स्वाभाव्यात्कार्योत्पत्त्यभ्युपगमे, चेद्—यदि ब्रूषे अत्र—स्वभाववादापत्तौ को दोष 'उच्यतां'—भण्यताम् । 'तदन्यवादाभावः'—कालादिशेषकारणाऽपलाप 'चेत्'—यदि ब्रूषे, आचार्यः,—न—नैव, तत्-परोक्तम्, कुत इत्याह 'तदन्याऽनपोहनात्'—तस्मात्तत्स्वाभाव्याद्येऽन्ये कालादयस्तेषामनपोहनादनिराकरणात् तेषामपि कारणत्वेनाभ्युपगमात् ॥७८॥ एतदेव भावयन्नाह—

कालादिसचिवश्चायमिष्ट एव महात्मभिः ।
सर्वत्र व्यापकत्वेन, न च युक्त्या न युज्यते ॥७९॥

'कालादिसचिवश्च' कालादिसहायः पुनः अयं—स्वभावः 'इष्ट एव'—सम्मत एव महात्मभिः सिद्धसेनमल्लवादिप्रभृतिभिरस्मत्स्वयूथ्यैः । कथमित्याह 'सर्वत्र' कार्ये 'व्यापकत्वेन' कार्त्स्न्यवृत्त्या सम्मतिप्रभृतिशास्त्रेषु, न चेष्टमात्रमेवेदं किन्तु युक्तियुक्तमपीत्याह 'न च'—नैव युक्त्या—उपपत्त्या 'न युज्यते' किन्तु युज्यत एव ॥७९॥ तथा हि—

तथात्मपरिणामात्तु, कर्मबन्धस्ततोऽपि च ।
तथादुःखादि कालेन, तत्स्वभावादृते कथम् ॥८०॥

'तथात्मपरिणामात्तु'—तत्प्रकारात्मपरिणतेरेव, 'कर्मबन्धः'—कर्मोपादानं सम्पद्यते 'ततोऽपि च'—कर्मबन्धाच्च 'तथा दुःखादि'-तत्प्रकारसुखदुःखलक्षणं कार्यमुज्जृम्भते 'कालेन'—ग्रीष्मवर्षादिरूपेण 'तत्स्वभावादृते'—तत्स्वभावं विना 'कथं'—केन प्रकारेण, नैवेत्यर्थः । तत्स्वाभाव्ये तु सति स्वपरिणामादेवोपात्तकर्मा तथाविधकालबलेन सुखदुःखभागात्मा भवतीति ॥८०॥ एवं च तत्स्वाभाव्याधीने सति सर्वस्मिन् कार्ये—

वृथा कालादिवादश्चेन्न तद्बीजस्य भावतः ।
अकिञ्चित्करमेतच्चेन्न स्वभावोपयोगतः ॥८१॥

वृथा—विफलः, कालादिवादस्तत्स्वाभाव्यविलक्षणकारणाभ्युपगमः, चेद्—यदि त्रपे । न—नैवैतद्यदुक्तं परेण, कुत इत्याह 'तद्बीजस्य'—कालादिबीजस्य तच्छक्तिरूपस्य 'भावत.'—सत्त्वात् , तत्स्वाभाव्याधीनतायामपि कार्याणाम् अकिंचित्कर—कार्याऽकारि एतत्—कार्यादिबीजम् 'चेत' यद्युच्यते परेण, न—नैव, एतत्कुत इत्याह 'स्वभावोपयोगत'—स्वभावे सर्वभावानां कार्येषु स्वत एव प्रवर्तमाने 'उपयोगत'—कालादिबीजानां सहकारित्वेन व्यापारान्मृद इव घटपरिणतौ चक्रचीवरादीनामिति ॥८१॥ एतदेव भावयति—

सामग्र्य' कार्यहेतुत्वं, तदन्याभावतोऽपि हि ।
तदभावादिति ज्ञेयं, कालादीना नियोगतः ॥८२॥

'सामग्र्या '—समग्रसयोगलक्षणाया' 'कार्यहेतुत्वं'—सामान्येन ' घटादिसाध्यनिमित्तत्वम् 'तदन्याभावतोऽपि हि'—तस्य परिणामिकारणस्य यान्यन्यानि सहकारिकारणानि तेपामभावतोऽभावात्, किं पुनः परिणामिहेतोरभाव—इत्यपिहिशब्दार्थ. । तदभावात्—कार्याभावात् इत्यस्मात्कारणात् ज्ञेयमवगन्तव्यम् । प्रस्तुतमपि कार्यं कालादीनां—सहकारिणां, नियोगतो व्यापारात्तत्स्वाभाव्ये सत्यपि न पुनरन्यथेति ॥८२॥ प्रस्तुतमेवार्थमाश्रित्याह—

एतच्चान्यत्र महता प्रपञ्चेन निरूपितम् ।
नेह प्रतन्यतेऽत्यन्तं लेशतस्तूक्तमेव हि ॥८३॥

'एतच्च'—एतत्पुन. सामग्र्या. कालादिकायाः कार्यहेतुत्वम् 'अन्यत्र'—शास्त्रवार्तासमुच्चयादिपु महता—बृहता, 'प्रपञ्चेन निरूपितं'—चर्चित यत' ततो न—नैव, इह—शास्त्रे, प्रतन्यते—विस्तार्यते । अत्यंतं—अतीव । लेशतस्तु—सक्षेपेण पुन., उक्तमेव हि—दर्शितमेव हि ॥८३॥ अत एवाह—

कृतमत्र प्रसङ्गेन प्रकृतं प्रस्तुमोऽधुना ।
नाध्यात्मयोगभेदत्वादावर्तेष्वपरेष्वपि ॥८४॥

कृतं—पर्याप्तम् अत्र—स्थाने प्रसङ्गेन—प्रबन्धेन कालादिसामग्रीविषयेण प्रकृतं—प्रारब्धम् प्रस्तुमः—प्रवर्तयाम अधुना—सम्प्रति। तदेव च दर्शयति। न—नैव, अध्यात्मयोगभेदत्वाद्—योगविशेषत्वात् आवर्तेषु-पुद्गलपरावर्तरूपेषु अपरेष्वपि—चरमव्यतिरिक्तेषु, चरमे तावद्भवत्येवेत्यपिशब्दार्थः ॥८४॥

अत्र हेतुमाह—

तीव्रपापाभिभूतत्वाज्ज्ञानलोचनवर्जिताः।
सद्वर्त्मावतरन्त्येषु, न सत्त्वा गहनान्धवत् ॥८५॥

'तीव्रपापाभिभूतत्वात्'-तीव्रेणातिदारुणेन पापेन मिथ्यात्वादिना अभिभूतत्वात्परतन्त्रीकृतत्वात्, अत एव ज्ञानलोचनवर्जिता—युक्तायुक्तविवेचननिपुणसंवेदननयनरहिता किमित्याह सद्वर्त्म—सन्मार्गं अवतरन्ति—आगच्छन्ति, एषु—अन्येषु परावर्तेषु न—नैव सत्त्वाः—जन्तवः, दृष्टान्तमाह 'गहनान्धवत्'—महाकान्तारपतितजात्यन्ध इवेति ॥८५॥ एतदपि कुत इत्याह—

भवाभिनन्दिनः प्रायस्त्रिसंज्ञा एव दुःखिताः।
केचिद्धर्मकृतोऽपि स्युर्लोकपंक्तिकृतादराः ॥८६॥

जातिजरामरणाद्युपद्रवव्रातविधुरितमपि भवमभिनन्दन्ति तच्छीलाश्च ये ते तथा, प्रायो—बाहुल्येन 'त्रिसंज्ञा एव'—तिस्र आहारभयपरिग्रहरूपा संज्ञा येषां ते तथा, मैथुनसंज्ञायाश्च कदाचित्केषाञ्चिदव्यक्तावस्थाया अपि भावात् प्रायस्त्रिसंज्ञा एवेत्येवमुक्तमिति। अत एव 'दुःखिता'—दुःखापोहकविवेकस्य स्वप्नेऽप्यभावात् सततमेव दुःखभाजः, तथा केचित् न सर्वे 'धर्मकृतोऽपि'—लौकिकलोकोत्तरप्रव्रज्यादिधर्मकारिणः किं पुनस्तदकारिण इत्यपिशब्दार्थः, स्युः—भवेयुः। कीदृशा इत्याह 'लोकपंक्तिकृतादराः'—लोकपंक्तिर्लोकमध्ये शुभभावसम्पादनरूपा तस्यां कृतयत्नाः, 'अन्यावर्तेषु' इति अनुवर्तत इति ॥८६॥ अथ भवाभिनन्दिस्वरूपमाह—

क्षुद्रो लाभरतिर्दीनो, मत्सरी भयवान् शठः।
अज्ञो भवाभिनन्दी स्यान्निष्फलारम्भसङ्गतः ॥८७॥

क्षुद्र'–कृपणो, लाभरतिर्याञ्चाशील., दीन.–सदैवादृष्टकल्याणः, मत्सरी–परकल्याणदु.स्थितः, भयवान्नित्यभीतः, शठो–मायावी अज्ञो–मूर्खः, भवाभिनन्दी–"असारोऽप्येष संसारः, सारवानिव लक्ष्यते। दधिदुग्धाम्बुताम्बूलपुष्पपण्याङ्गनादिभि. ॥१॥" इत्यादिवचनैः संसाराभिनन्दनशीलः, स्याद्–भवेत् कीदृश इत्याह 'निष्फलारम्भसङ्गत.'–सर्वत्राऽतत्त्वाभिनिवेशाद्वन्ध्यक्रियासम्पन्न इति ॥८७॥ सम्प्रति लोकपंक्तिस्वरूपं व्याचष्टे—

लोकाराधनहेतोर्या, मलिनेनान्तरात्मना।
क्रियते सत्क्रिया साऽत्र, लोकपंक्तिरुदाहृता ॥८८॥

लोकाराधनहेतो–र्लोकचित्तावर्जननिमित्त या 'मलिनेन'–कीर्तिस्पृहादिमालिन्यवता अन्तरात्मना–चित्तरूपेण क्रियते–विधीयते सत्क्रिया–शिष्टसमाचाररूपा, सा अत्र–योगनिरूपणायाम् 'लोकपक्ति.'–प्रागुद्दिष्टा–'उदाहृता' योगशास्त्रज्ञै' ॥८८॥ अथैवा दूषयन्नाह—

भवाभिनन्दिनो लोकपंक्त्या धर्मक्रियामपि।
महतो हीनदृष्ट्योच्चैर्दुरन्ता तद्विदो विदुः ॥८९॥

भवाभिनन्दिनो–जीवस्य, लोकपंक्त्योक्तरूपया 'धर्मक्रियामपि' किं पुनरितरक्रियामित्यपिशब्दार्थ', किमित्याह महत.–अधरीकृतकल्पद्रुमचिन्तामणिकामधेनोर्धर्मस्य, हीनदृष्ट्या–बुद्धिमतामत्यन्तमनादेयस्य कीर्त्यादिमात्रस्य हेतुभावेन नियोजनाद्धीनतयावलोकनेन 'उच्चैः'–अत्यर्थं शेषानर्थहेतुभ्य. सकाशात, दुरन्तां–दारुणपरिणामां तद्विदः–लोकपंक्तिस्वरूपविद. विदु.–जानते, इति लोकपक्तिस्त्याज्यैवेति ॥८९॥ अथैषापि विवेकिन. सुन्दरपरिणामा स्यादित्यभिधित्सुराह—

धर्मार्थं लोकपक्तिः स्यात् कल्याणाङ्गं महामतेः।
तदर्थं तु पुनर्धर्मः, पापायाल्पधियामलम् ॥९०॥

धर्मार्थं–सम्यग्दर्शनादिमोक्षबीजाधाननिमित्तम्, लोकपंक्तिर्दानसम्मानोचितसम्भाषणादिभिश्चित्रैरुपायै. स्याद्–भवेत्, कल्याणाङ्गं–श्रेय कारणं, महामते.–प्रशस्तबुद्धे'। अत एवोच्यते—

"युक्त जनप्रियत्वं, शुद्धं सद्धर्मसिद्धिफलदमलम् ।
धर्मप्रशामनादेर्बीजाधानादिभावेन ॥१॥" इति

व्यतिरेकमाह–तदर्थं तु लोकपंक्तिनिमित्तमेव, पुनर्धर्मं सदाचाररूप पापाय–पापकर्मनिमित्तं अल्पधिया–तुच्छबुद्धीना पुसा, अलं–अत्यर्थमिति ॥९०॥ अत्रैव कश्चिद्विशेषमाह—

लोकपङ्क्तिमत· प्राहुरनाभोगवतो वरम् ।
धर्मक्रिया न महतो, हीनताऽत्र यतस्तथा ॥९१॥

लोकपङ्क्तिमतो–लोकचित्ताराधनप्रधानस्य प्राहु·–ब्रुवते कीदृशस्येत्याह 'अनाभोगवत·'–सम्मूर्छनजप्रायस्य स्वभावत एव वैनयिकप्रकृतेः 'वरं'–पूर्वोक्ताल्पबुद्धिधर्मक्रियाया· सकाशात् प्रधान यथा भवति 'धर्मक्रिया'–सदाचाररूपाम् । कुत इत्याह न–नैव महतो–धर्मस्य हीनता–हीनभाव· अत्र–अनाभोगवतो धर्मक्रियाया यत –यस्मात् कारणात् तथा–तेन प्रकारेण, यथा मलिनात्मारब्धधर्मक्रियायाम् । इदमुक्तं भवति–अनाभोगवतो लोकाराधनप्रधानस्य कीर्त्यादिस्पृहामलिनात्मधर्मक्रियाया सकाशात् मनाक् सुन्दरैव धर्मक्रिया महतो धर्मस्य तत्र हीनतयानवलोकनादिति ॥९१॥

तत्त्वेन तु पुनर्नैकाप्यत्र धर्मक्रिया मता ।
तत्प्रवृत्त्यादिवैगुण्याल्लोभक्रोधक्रिया यथा ॥९२॥

तत्त्वेन तु पुनः–तत्त्ववृत्त्या पुन· न–नैव 'एकापि' किं पुनर्द्वे इत्यपिशब्दार्थः, अत्रा-ऽनयोर्मलिनान्तरात्मानाभोगवत्पुरुषकृतयोर्धर्मक्रिययोर्मध्ये धर्मक्रिया 'मता' संमता । कुत इत्याह तत्प्रवृत्त्यादिवैगुण्यात–तत्र धर्मे प्रवृत्तिविघ्नजयसिद्धिविनियोगाना वैगुण्यादभावात् । दृष्टान्तमाह 'लोभक्रोधक्रिया'–प्रतीतरूपा यथा–येन प्रकारेणेति ॥९२॥ अथ निगमयन्नाह—

तस्मादचरमावर्तेष्वध्यात्मं नैव युज्यते ।
कायस्थितितरोर्यद्वत्तज्जन्मस्वामर सुखम् ॥९३॥

'तत·'-तस्माल्लोकपंक्तिमात्रफलाया धर्मक्रियाया अधर्मत्वाद्धेतो· अचरमावर्तेषु-उक्तरूपेषु अध्यात्मं नैव युज्यते । अत्र दृष्टान्तमाह 'कायस्थि-

तिवरो '—काये वनस्पतिकाय एवानन्तोत्सर्पिण्यवसर्पिणीप्रमाणा स्थितिरवस्थानं यस्य स तथा तस्य तरोर्वनस्पते. यद्वद्-यथा तज्जन्मसु-वनस्पतिजन्मस्वनन्तानन्तरूपेषु आमर-अमरसम्बन्धि सुख, तत्सुखकारणानामणुव्रतमहाव्रतादीना तेषु कदाचिदप्यभावात् ॥९३॥ तथा—

तैजसाना च जीवाना, भव्यानामपि नो तदा ।
यथा चारित्रमित्येव, नान्यदा योगसम्भवः ॥९४॥

तैजसाना-चकाराद्वायूनां च मनुष्यत्वमात्रत्वस्याप्ययोग्यानां 'जीवानाम् भव्यानामपि' किं पुनरितरेषाम् नो-नैव च तदा-तैजसावस्थाकाले 'यथा' इति दृष्टान्तार्थः 'चारित्रं' देशत. सर्वतो वा । इत्येव दार्ष्टान्तिकार्थः । नान्यदा-ऽन्यावर्तेषु 'योगसम्भव' इति ॥९४॥ तथा—

तृणादीना च भावाना, योग्यानामपि नो यथा ।
तदा घृतादिभावः स्यात्, तद्वद्योगोऽपि नान्यदा ॥९५॥

तृणादीना—तृणपत्रपुष्पफलखलादीनां गवादिचारणा(?)णाम्, चकारो दृष्टान्तान्तरसमुच्चये, भावाना—पदार्थानाम् योग्यानामपि-घृतादि प्रतीत्याऽनन्तरमेवोपपन्नहेतुरूपागा किं पुनरितरेषामित्यपिशब्दार्थ. 'नो यथा तदा' तृणादिकाले घृतादिभावो-घृतदुग्धदध्यादिभाव., स्याद्-भवेत् । तद्वत्-तथा योगोऽपि-अध्यात्मादिकं 'तृणादिकाले' इत्यपिशब्दार्थः नान्यदेति ॥९५॥

अत एवाह—

नवनीतादिकल्पस्तत्तद्भावेऽत्र निबन्धनम् ।
पुद्गलाना परावर्तश्चरमो न्यायसङ्गतम् ॥९६॥

नवनीतं-म्रक्षणम् आदिशब्दाद्दधिदुग्धादिग्रह. ततो घृतादिपरिणामे नवनीतादिकल्पः तत्-तस्मात् तद्भावेऽध्यात्मादिपरिणामे अत्र—योगविचारे निबन्धनं—हेतु 'पुद्गलानां परावर्त' उक्तरूप चरमोऽपश्चिम., न्यायसंगत —युक्तमेतत् ॥९६॥

अत एवेह निर्दिष्टा, पूर्वसेवापि या परैः ।
साऽऽसन्नाऽन्यगता मन्ये, भवाभिष्वङ्गभावतः ॥९७॥

'अत एव'—चरमावर्तेऽध्यात्मभावादेव इह—योगप्रज्ञापनायाम् निर्दिष्टा-निरूपिता। पूर्वसेवापि—योगाद्यर्थं यमनियमाराधनरूपा 'किं पुनर्लौकिपंक्ति-मात्रमित्यपिशब्दार्थः या 'परैः'—कापिलादिभिः, सा आसन्नान्यगता चरमा-वर्तासन्नान्यतरपरावर्तवर्तिनीति मन्येऽहं, न पुनश्चरमावर्तगतेति, कुत इत्याह 'भवाभिष्वङ्गभावत.'—अत्यन्तदृढसांसारिकफलबन्धात् ॥९७॥

एनामेवाधिकृत्याह—

अपुनर्बन्धकादीना, भवाब्धौ चलितात्मनाम्।
नासौ तथाविधा युक्ता, वक्ष्यामो युक्तिमत्र तु ॥९८॥

अपुनर्बन्धकादीनां-अपुनर्बन्धकसम्यग्दृष्ट्यादीनाम् । भवाब्धौ—संसार-जलधौ चलितात्मना—विनिवर्तमानात्मनाम्। किमित्याह नासौ—पूर्वसेवा तथाविधा—अपरोपन्यस्तपूर्वसेवासदृशी युक्ता । कुत॰ यतः 'वक्ष्यामो' भणिष्यामो युक्तिं—हेतुं अत्र तु—अनयो॰ पुन॰ पूर्वसेवयोर्विशेषगतामिति ॥९८॥ युक्तिमेवाह—

मुक्तिमार्गपर युक्त्या, युज्यते विमलं मनः।
सद्बुद्ध्यासन्नभावेन, यदमीषा महात्मनाम् ॥९९॥

मुक्तिमार्गपर-निर्वाणपथपरायणम् युक्तया युज्यते-घटते। किमित्याह विमलं-अतितीव्रमिथ्यात्वादिमलविकलं मन॰-अन्तकरणं सद्बुद्ध्यासन्नभावेन —सम्यक्त्वाद्युत्तरोत्तरशुद्धगुणस्थानसमीपभावेन यत्—यस्मात अमीषा—अपुन-र्बन्धकादीना महात्मनां-प्रशस्तस्वभावाना न पुनरावर्तान्तरवर्तिनां, यमनि-यमानुष्ठानेऽप्यतिदृढभवाभिष्वङ्गभावादिति ॥९९॥ अथैतदेव तीर्थान्तरी-यमतेन संवादयन्नाह—

तथा चान्यैरपि ह्येतद्योगमार्गकृतश्रमैः।
सङ्गीतमुक्तिभेदेन, यद्गोपेन्द्रमिदं वचः ॥१००॥

'तथा च' इति पूर्वोक्तार्थभावनार्थः 'अन्यैरपि हि' किं पुनरस्माभि-रित्यपिहिशब्दार्थः, एतत्-चरमावर्त एव विमलमनोलक्षणं वस्तु योगमार्ग-कृतश्रमैः-योगमार्गविहिताभ्यामैः सङ्गीत उक्तम् उक्तिभेदेन शब्दविशेष

लक्षणेन। कुत ? यद्-यस्मात 'गौपेन्द्रं'-भगवद्गोपेन्द्रोक्तम् इदमनन्तरमेव वक्ष्यमाण वचो-वचनम् ॥१००॥ एतदेव दर्शयति—

अनिवृत्ताधिकारायां प्रकृतौ सर्वथैव हि।
न पुसस्तत्त्वमार्गेऽस्मिञ्जिज्ञासापि प्रवर्तते ॥१०१॥

अनिवृत्ताधिकाराया अनिवृत्तोऽव्यावृत्तोऽधिकार. पुरुषाभिभवरूपो यस्या सा तथा तस्याम् प्रकृतौ-प्रधानाभिधानायाम् 'सर्वथैव हि'-सर्वैरेव प्रकारैरपुनर्बन्धकत्वस्याप्यप्राप्तावित्यर्थ. न-नैव पुंस-पुरुषस्य तत्त्वमार्गेऽस्मिन्वक्तुमुपक्रान्ते, 'जिज्ञासापि'-योगमार्गं ज्ञातुमिच्छा किं पुनस्तदभ्यास इत्यपिशब्दार्थ' प्रवर्तते-सञ्जायत इति ॥१०१॥ एतदेव भावयति

क्षेत्ररोगाभिभूतस्य, यथात्यन्तं विपर्ययः।
तद्वदेवास्य विज्ञेयस्तदावर्तनियोगत. ॥१०२॥

क्षेत्ररोगाभिभूतस्य-क्षेत्ररोगेण रोगान्तराधारभूतेन कुष्ठादिनाऽभिभूतस्य 'यथा' इति दृष्टान्तार्थं अत्यन्त अतीव 'विपर्ययो'-मतिभ्रंशरूप स्यात् 'तद्वदेव' इति दार्ष्टान्तिकार्थः अस्य-अनिवृत्तप्रकृत्यधिकारस्य पुंस 'विज्ञेयो' विपर्ययो योगमार्गाऽप्रतिपत्तिरूप' कुत इत्याह 'तदावर्त्तनियोगत.-'तस्याऽनिवृत्ताधिकारप्रकृतिकालभाविन आवर्तस्य प्रकृतेरेव परिवर्तस्य नियोगतो व्यापारात् ॥१०२॥ एतदपि कथमित्याह—

जिज्ञासायामपि ह्यत्र, कश्चित्सर्गो निवर्तते।
नाक्षीणपाप एकान्तादाप्नोति कुशला धियम् ॥१०३॥

'जिज्ञासायामपि'-ज्ञातुमिच्छायां किं पुनरभ्यास इत्यपिशब्दार्थं हिर्यस्मात 'अत्र' योगे विषयभूते कश्चिदनिर्धारितरूप 'सर्ग.'-प्रकृते पुरुषाभिभवलक्षण. निवर्तते। एतदपि कुत इत्याह न-नैव, अक्षीणपापः-अव्यावृत्तकल्मषः एकान्तात्-एकान्तेनैव आप्नोति-लभते प्राणी, कुशला -मुक्तिपथानुवर्तिनीं, धियं-बुद्धिमिति, किं तु कथंचित्क्षीणपाप. ॥१०३॥

नवलदात्वे कल्याणमायत्या तु विशेषतः।
मन्त्रायपि सदा चारु, सर्वावस्थाहित मतम् ॥१०४॥

ततः—कुशलधीप्राप्तेः तदात्वे—कुशलधीप्राप्तिकाले कल्याणं—श्रेय.-ममागमरूपम् आयत्यां तु—आगामिनि काले पुन. कुशलबुद्धिप्रभावोपात्त-पुण्यपरिपाकवशेन विशेषतो—विशेषेण । एतदेव प्रतिवस्तूपमया दर्शयति 'मन्त्राद्यपि'—मन्त्रमण्यौषध्यादि 'किं पुन. प्राकृतो योगः' सदा—सर्वकालम् 'चारु'—सुन्दरस्वभावम् 'सर्वावस्थाहितं'—सर्वावस्थासु व्यापारणाऽव्यापारण-रूपासु हित कल्याणावहम् मतं—इष्ट मतिमतामिति ॥१०४॥

इत्थं गोपेन्द्रमतमनूद्य वस्तुस्थितिं प्रतिपादयन्नाह—

उभयोस्तत्स्वभावत्वात्तदावर्त्तनियोगत ।<br>
युज्यते सर्वमेवैतन्नान्यथेति मनीषिण ॥१०५॥

उभयोः—पुरुषप्रकृत्योः तत्स्वभावत्वात्-प्रकृतेर्व्यावृत्त्यधिकारस्वभावत्वात् तद्व्यावृत्त्यधिकारत्वे च पुरुषस्य कुशलबुद्धिप्रापकस्वभावत्वात् 'तदावर्त-नियोगतः'—तस्य चरमावर्तस्य नियोगत सामर्थ्यात् युज्यते—घटते 'सर्वमेवैतत् कुशलधीप्राप्त्यादि, नान्यथा—उभयोस्तत्स्वभावत्वाभावे, इत्येतत्प्राहुः मनी-षिणो—मतिमन्त. ॥१०५॥ तथा—

अत्राप्येतद्विचित्रायाः, प्रकृतेर्युज्यते परम् ।<br>
इत्थमावर्तभेदेन, यदि सम्यग्निरूप्यते ॥१०६॥

अत्राप्युभयोस्तत्स्वभावत्वे, 'किं पुनस्तदभावे न घटत' इत्यपिशब्दार्थः, एतद्-निवृत्ताधिकारत्वम् विचित्रायास्तत्सामग्रीबलेन नानारूपाया प्रकृतेः—कर्मरूपायाः युज्यते पर—केवलम् । इत्थमुक्तप्रकारेण 'आवर्तभेदेन'—चरमा-वर्तरूपेण, यदि—चेत् सम्यग्यथावत् 'निरूप्यते'—विमृश्यत इति ॥१०६॥

अत्रैव विपक्षे बाधामाह—

अन्यथैकस्वभावत्वादधिकारनिवृत्तितः ।<br>
एकस्य सर्वतद्भावे, बलादापद्यते सदा ॥१०७॥

अन्यथा—प्रकृतिवैचित्र्याभावे 'एकस्वभात्वाद्' एकः कथंचिदवि-चलितः स्वभावो यस्याः सा तथा, तद्भावस्तत्त्वं तस्मात् । 'अधिकार-निवृत्तितो'—ऽधिकारनिवृत्तौ सत्यामित्यर्थ. एकस्य—पुंस. 'सर्वतद्भाव.'—

सर्वेषु पुरुषेष्वधिकारनिवृत्तिभावः बलाद्—एकस्वभावत्वसामर्थ्यात् आपद्यते —प्राप्नोति सदा—सर्वकालम्, अन्यथा सर्वत्रापि जगति तस्या एकस्वभावत्वाऽयोगात् ॥१०७॥ दूषणान्तरमाह—

तुल्य एव तथा सर्गः, सर्वेषां सम्प्रसज्यते ।
ब्रह्मादिस्तम्बपर्यन्त एवं मुक्ति ससाधना ॥१०८॥

'तुल्य एव'—सदृश एव 'तथा' इति दूषणान्तरार्थे 'सर्गः'—स्वर्गादि-सृष्टिरूपः 'सर्वेषा'—सृष्टिमताम् सम्प्रसज्यत—आपद्यते । 'ब्रह्मादि'-ब्रह्मलोक-प्रभृतिक, 'स्तम्बपर्यन्तो'—नारकतिर्यग्रूपलोकपर्यवसानः सांख्यसमयप्रसिद्धः । तथा च ते पठन्ति । "ऊर्ध्वं सत्त्वविशालस्तमोविशालश्च मूलतः सर्गः ॥ मध्ये रजोविशालो, ब्रह्मादिस्तम्बपर्यन्त ॥१॥" एवं—सर्गवत् मुक्तिः-मोक्ष सर्वपुरुषाणा ससाधना—यमनियमानुष्ठानसहिता तुल्या सम्पद्यते ॥१०८॥ इत्य योगमाहात्म्यं तद्दूरापता चाभिधाय साम्प्रतं प्रागुद्दिष्टपूर्वसेवाक्रममाह—

पूर्वसेवा तु तन्त्रज्ञैर्गुरुदेवादिपूजनम् ।
सदाचारस्तपो मुक्त्यद्वेषश्चेह प्रकीर्तिता ॥१०९॥

'पूर्वसेवा तु'—योगप्रासादप्रथमभूमिकारूपा पुन. 'तन्त्रज्ञै'—सम्यगधिगतशास्त्रै. 'प्रकीर्तिता' इत्युत्तरेण योग. । कीदृशीत्याह 'गुरुदेवादिपूजन' वक्ष्यमाणरूप १, तथा सदाचार. २, तपो ३, मुक्त्यद्वेषश्च ४, इह—योग-चिन्तायां प्रकीर्तिता-निरूपिता ॥१०९॥ एतदेव क्रमेण व्याचष्टे—

माता पिता कलाचार्य एतेषा ज्ञातयस्तथा ।
वृद्धा धर्मोपदेष्टारो, गुरुवर्गः सता मतः ॥११०॥

माता-जननी पिता-जनक कलाचार्यो—लिप्यादिकलाशिक्षणोपाध्याय एतेषा-मातृप्रभृतीनां, ज्ञातयो—भ्रातृभगिन्यादय' 'तथा' इति समुच्चये 'वृद्धा' श्रुतवयोवृद्धलक्षणा. कीदृशा इत्याह 'धर्मोपदेष्टारः' धर्मोपदेशप्रवर्तका' । किमित्याह 'गुरुवर्ग.'—गौरव्यलोकसमुदायरूप. 'सता'—शिष्टानां 'मत'—अभीष्ट इति ॥११०॥

पूजन चास्य विज्ञेय, त्रिसंध्यं नमनक्रिया ।
तस्यानवसरेऽप्युच्चैश्चेतस्यारोपितस्य तु ॥१११॥

पूजन च–पूजनं पुनः अस्य–गुरुवर्गस्य विज्ञेय-अवगन्तव्यम्, किमित्याह त्रिसंध्यं–संध्यात्रयाराधनेन, नमनक्रिया-प्रणामरूपा । यदि कथंचित्साक्षादसौ प्रणन्तुं न पार्यते तदा किं कृत्यमित्याह–तस्य–गुरुवर्गस्य अनवसरेऽपि –तथाविधप्रघट्टकवशात्-'किं पुनरवसर' इत्यपिशब्दार्थः उच्चै.-अत्यर्थं, चेतसि –मनसि, आरोपितस्य तु–पूर्ववद्‌गुरुवर्गस्य पूजनमिति ॥१११॥ तथा–

अभ्युत्थानादियोगश्च, तदन्ते निभृतासनम् ।
नामग्रहश्च नाऽस्थाने, नावर्णश्रवण क्वचित् ॥११२॥

अभ्युत्थानादियोगो-ऽभ्युत्थानासनप्रदानस्थितपर्युपासनादिविनयव्यापार-रूपः, चः समुच्चये, तदन्ते-गुरुवर्गान्ते निभृतासनं अप्रगल्भतयावस्थानम् 'नामग्रहश्च'-नामोच्चारणरूपः न-नैव 'अस्थाने'-मूत्रपुरीषोत्सर्गादिस्थानरूपे । न-नैव अवर्णश्रवणं-अवर्णवादाकर्णनम् क्वचित् परपक्षमध्यावस्थानेऽपीति ॥११२॥ तथा—

साराणा च यथाशक्ति, वस्त्रादीनां निवेदनम् ।
परलोकक्रियाणां च, कारण तेन सर्वदा ॥११३॥

साराणां च उत्कृष्टानाम् यथाशक्ति-अस्य यावती शक्तिस्तया वस्त्रा-दीना-वसनपानभोजनालङ्कारादीनाम् निवेदन-समर्पणम् तथा 'परलोक-क्रियाणा च'—देवातिथिदीनानाथप्रतिपत्तिप्रभृतीनाम् कारणं–विधापनम् । तेन-गुरुवर्गेण सर्वदा-सर्वकालम् ॥११३॥ तथा—

त्यागश्च तदनिष्टाना, तदिष्टेषु प्रवर्तनम् ।
औचित्येन त्विदं ज्ञेयं, प्राहुर्धर्माद्यपीडया ॥११४॥

'त्यागश्च'-प्रोज्झनम् 'तदनिष्टाना'-गुरुवर्गासंमतानां व्यवहाराणाम्, 'तदिष्टेषु'-गुरुवर्गप्रियेषु व्यवहारेष्वेव 'प्रवर्तनम्',-अत्रापवादमाह 'औचित्येन तु'-औचित्यवृत्त्या पुनः, इदं-पूजनं, ज्ञेय प्राहुः-उक्तवन्तः । पूर्वं औचित्यमेव व्यनक्ति-धर्माद्यपीडया-धर्मादीनां पुरुषार्थानामबाधया । "यदि तदनिष्टेभ्यो

निवृत्तौ तदिष्टेषु च प्रवृत्तौ धर्मादय पुरुषार्थां बाध्यन्ते, तदा न तन्निवृत्ति-परेण भाव्यं किं तु पुरुषार्थाराधनपरेणैव, अतिदुर्लभत्वात्पुरुषार्थाराधनकाल-स्येति" ॥११४॥ तथा—

तदासनाद्यभोगश्च तीर्थे तद्वित्तयोजनम् ।
तद्बिम्बन्यासंस्कार ऊर्ध्वदेहक्रिया परा ॥११५॥

'तदासनाद्यभोगश्च'-गुरुवर्गस्यासनशयनभोजनपात्रादीनामभोगोऽपरि-भोगः 'तीर्थे'-देवतायतनादौ 'तद्वित्तयोजनं' अलङ्कारादिगुरुवर्गद्रव्यनियोजनम् अन्यथा तत्स्वयग्रहे गुरुवर्गमरणाद्यनुमतिप्रसङ्ग. स्यात् । तद्बिम्बन्यासंस्कारः तस्य गुरुवर्गस्य यो बिम्बन्यास. प्रतिबिम्बस्थापनारूपस्तस्य संस्कारो धूप-पुष्पादिपूजारूपः, 'तत्कारितदेवतादे पूजारूप' इत्यन्ये । 'ऊर्ध्वदेहक्रिया'-गुरुदेवपूजनादिमृतकार्यकरणरूपा परा-दर्शितादरा ॥११५॥

अथ देवपूजाविधिमाह—

पुष्पैश्च बलिना चैव, वस्त्रै. स्तोत्रैश्च शोभनैः ।
देवाना पूजनं ज्ञेयं, शौचश्रद्धासमन्वितम् ॥११६॥

पुष्पैः-जातिशतपत्रिकादिसम्भवै, बलिना—पक्वान्नफलाद्युपहाररूपेण, वस्त्रैर्वसनै. स्तोत्रै.-स्तवनैः । चशब्दौ चैवशब्दश्च समुच्चयार्थाः । शोभनैराद-रोपहितत्वेन सुन्दरै देवानां-आराध्यतमानाम् पूजनं ज्ञेयम् । कीदृशमित्याह-शौचश्रद्धासमन्वितं-शौचेन शरीरवस्त्रद्रव्यव्यवहारशुद्धिरूपेण श्रद्धया च बहुमानेन समन्वितं युक्तमिति ॥११६॥ एतच्च—

अविशेषेण सर्वेषामधिमुक्तिवशेन वा ।
गृहिणा माननीया यत्, सर्वे देवा महात्मनाम् ॥११७॥

'अविशेषेण'-साधारणवृत्त्या सर्वेषा-पारगतसुगतहरहरिहिरण्यगर्भादीनाम् । पक्षान्तरमाह-अधिमुक्तिवशेन वा—अथवा यस्य यत्र देवतायामतिशयेन श्रद्धा तद्वशेन । कुत इत्याह 'गृहिणां'-अद्यापि कुतोऽपि मतिमोहादनिर्णीतदे-वताविशेषाणां, माननीया-गौरवार्हाः, यत्-यस्मात् 'सर्वे देवा'-उक्तरूपा 'महात्मना'-परलोकप्रधानतया प्रशस्तात्मनामिति ॥११७॥ एतदपि कथमित्याह—

सर्वान्देवान्नमस्यन्ति, नैकं देवं समाश्रिताः ।
जितेन्द्रिया जितक्रोधा, दुर्गाण्यतितरन्ति ते ॥११८॥

सर्वान्देवान्नमस्यन्ति-नमस्कुर्वते । व्यतिरेकमाह 'नैकं' कंचन 'देवं समाश्रिता' प्रतिपन्ना वर्तन्ते, यतो 'जितेन्द्रियाः'-निगृहीतहृषीकाः 'जित-क्रोधा.'-अभिभूतकोपा. 'दुर्गाणि' नरकपातादीनि व्यसनानि अतितरन्ति -व्यतिक्रामन्ति, ते-सर्वदेवनमस्कर्तार ॥११८॥ ननु नैव ते लोके व्यवह्रियमाणाः सर्वेऽपि देवा मुक्तिपथप्रस्थितानामनुकूलाचरणा भवन्तीति कथमविशेषेण नमस्करणीयतेत्याशंक्याह—

चारिसञ्जीवनीचारन्याय एष सता मतः ।
नान्यथात्रेष्टसिद्धि स्याद्विशेषेणादिकर्मणाम् ॥११९॥

चारे'-प्रतीतरूपाया मध्ये सजीवन्यौषधिविशेषश्चारिसजीवनी तस्याश्चार –चरणं स एव 'न्यायो'-दृष्टान्तश्चारिसजीवनीचारन्यायः । एषोऽविशेषेण देवतानमस्करणीयतोपदेशः सतां-शिष्टानाम् मतो-अभिप्रेत. ।

भावार्थस्तु कथागम्य., सा चेयमभिधीयते ।

अस्ति स्वस्तिमती नाम, नगरी नागराकुला ॥१॥
तस्यामासीत्सुता काचिद्, ब्राह्मणस्य तथा सखी ।
तस्या एव पर पात्रं, सदा प्रेम्णो गतावधेः ॥२॥
तयोर्विवाहवशतो, भिन्नस्थाननिवासिता ।
जज्ञेऽन्यदा द्विजसुता, जाता चिन्तापरायणा ॥३॥
कथमास्ते सखीत्येवं, तत. प्राघूर्णिका गता ।
दृष्टा विषादजलधौ, निमग्ना सा तया ततः ॥४॥
पप्रच्छ-किं त्वमत्यन्तविच्छायवदना सखी ?
तयोचे पापसद्माहं, पत्युर्दुर्भगता गता ॥५॥
मा विषीद विषादोऽयं, निर्विशेषो विषात्सखि ।
करोम्यनड्वाहमह, पतिं ते मूलिकाबलात् ॥६॥
तस्या. सा मूलिका दत्त्वा, संनिवेशं निजं ययौ ।

अप्रीतमानसा तस्य, प्रायच्छत् तामसौ तव' ॥७॥

अभूद् गौरुद्धुरस्कन्धो, झगित्येव च सा हृदि।
विद्राणेष कथं सर्वकार्याणामक्षमो भवेत् ॥८॥

गोयूथान्तर्गतो नित्यं, बहिश्चारयितुं सकः।
तयारब्धो वटस्याधः, सोऽन्यदा विश्रमं गतः ॥९॥

तच्छाखायां नभश्चारिमिथुनस्य कथंचन।
विश्रान्तस्य मिथो जल्पप्रक्रमे रमणोऽब्रवीत् ॥१०॥

नात्रैष गौः स्वभावेन, किं तु वैगुण्यतोऽजनि।
पत्नी प्रतिबभापे सा, पुनर्नासौ कथं भवेत् ॥११॥

मूल्यन्तरोपयोगेन, क्वास्ते सास्य तरोरधः।
श्रुत्वैतत्सा पशो' पत्नी, पश्चात्तापितमानसा ॥१२॥

अभेदज्ञानतश्चारिं, सर्वां चारयितु तकम्।
प्रवृत्ता मूलिकाभोगात, सद्योऽसौ पुरुषो भवत् ॥१३॥

अजानानो (ना) यथा भेदं, मूलिकायास्तया पशु'।
चारितः सर्वतश्चारिं, पुनर्नृत्वोपलब्धये ॥१४॥

तथा धर्मगुरु शिष्यं, पशुप्रायं विशेषतः।
प्रवृत्तावक्षमं ज्ञात्वा, देवपूजादिके विधौ ॥१५॥

सामान्यदेवपूजादौ, प्रवृत्तिं कारयन्नपि।
विशिष्टसाध्यसिद्ध्यर्थं, न स्याद्दोषी मनागपि ॥१६॥ इति।

विपक्षे बाधामाह न-नैव अन्यथा-चारिसंजीवनीचारन्यायमन्तरेण अत्र-देवपूजनादौ प्रस्तुते इष्टसिद्धि'-विशिष्टमार्गावताररूपा' स्यात्-भवेत। अथ चोपदेशो यथा येषां दातव्यस्तदाह-विशेषेण-सम्यग्दृष्ट्याद्युचितदेशनापरिहाररूपेण, आदिकर्मणां-प्रथममेवारब्धस्थूलधर्माचाराणाम्। न ह्यत्यन्तमुग्धतया क्वचन देवतादिविशेषमजानाना विशेषप्रवृत्तेरद्यापि योग्याः, किं तु सामान्यरूपाया एवेति ॥११९॥

तर्हि कदा विशेषेण प्रवृत्तिरनुमन्यत इत्याशक्याह—

गुणाधिक्यपरिज्ञानाद्, विशेषेऽप्येतदिष्यते।
अद्वेषेण तदन्येषां, वृत्ताधिक्ये तथात्मनः ॥१२०॥

'गुणाधिक्यपरिज्ञानाद्'-देवतान्तरेभ्यो गुणाधिकस्य गुणवृद्धेरवगमात विशेषेऽप्यर्हदादौ किं पुनः सामान्येन एतत्पूजनमिष्यते। कथमित्याह अद्वेषेण-अमत्सरेण, तदन्येषां-पूज्यमानदेवताव्यतिरिक्तानां देवतान्तराणा, वृत्ताधिक्ये-आचाराधिक्ये सति 'तथा' इति विशेषणसमुच्चये 'आत्मनः'-स्वस्य देवतान्तराणि प्रतीत्येति ॥१२०॥ गुरुदेवादिपूजनमित्यत्रादिशब्दप्रगृहीतं पूजनीयान्तरमधिकृत्याह—

पात्रे दीनादिवर्गे च, दानं विधिवदिष्यते।
पोष्यवर्गाऽविरोधेन, न विरुद्धं स्वतश्च यत् ॥१२१॥

पात्रे-दायकलोकरक्षाकरे निर्दिक्ष्यमाणलक्षणे दीनादिवर्गे च-भणिष्यमाणरूप एव दानं-स्वविभवातिसर्गरूपम् विधिवद्-विधियुक्तम् 'इष्यते' मतिमद्भिः, कथमित्याह पोष्यवर्गा-ऽविरोधेन-मातापित्रादिपोषणीयलोकस्य वृत्तेरनुच्छेदनेन। न विरुद्ध न दायकग्राहकयोर्धर्मबाधाकारि हलोदूखलादिवत्, स्वतश्च-स्वात्मना च यत्-दीयमानमिति ॥१२१॥

एतदेव भावयति—

व्रतस्था लिङ्गिनः पात्रमपचास्तु विशेषतः।
स्वसिद्धान्ताऽविरोधेन, वर्तन्ते ये सदैव हि ॥१२२॥

व्रतस्था-हिंसानृतादिपापस्थानविरतिमन्तः 'लिङ्गिनो'-व्रतसूचकतथाविधनेपथ्यवन्तः 'पात्रम्' अविशेषेण वर्तन्ते। अत्रापि विशेषमाह—अपचास्तु—स्वयमेवापाचकाः पुनरुपलक्षणत्वात्परैरपाचयितारः पच्यमानाननुमन्तारश्च लिङ्गिन एव विशेषतो-विशेषेण पात्रमिति। तथा स्वसिद्धान्ताऽविरोधिन—स्वशास्त्रोक्तक्रियानुल्लङ्घनेन 'वर्तन्ते'-चेष्टन्ते ये सदैव हि—सर्वकालमेवेति ॥१२२॥

दीनान्धकृपणा ये तु, व्याधिग्रस्ता विशेषतः ।
निःस्वा क्रियान्तराऽशक्ता, एतद्वर्गो हि मीलकः ॥१२३॥

दीनान्धकृपणा-दीनाः क्षीणसकलपुरुषार्थशक्तयः, अन्धाः-नयनरहिताः, कृपणाः-स्वभावत एव सतां कृपास्थानम् । ये तु-ये च 'व्याधिग्रस्ता'-कुष्ठाद्यभिभूताः 'विशेषतो'—अत्यन्तम् तथा 'निःस्वा'-निर्धनाः कीदृशा एत इत्याह 'क्रियान्तराशक्ता'-निर्वाहहेतुव्यापारान्तराऽसमर्था ये प्राणिविशेषाः किमित्याह 'एतद्वर्ग.'-दीनादिवर्गो य. प्रागुद्दिष्ट' हिः पादपूरणार्थः 'मीलकः'-दीनादीनामेवेति ॥१२३॥ विधिवदित्युक्तमथ तदेव व्याचष्टे—

दत्तं यदुपकाराय, द्वयोरप्युपजायते ।
नातुरापथ्यतुल्यं तु तदेतद्विधिवन्मतम् ॥१२४॥

दत्तं-वितीर्णम् यदन्नादि उपकाराया-ऽनुग्रहाय द्वयोरपि-दायकग्राहकयो, उपजायते-न पुनरेकस्यैवेत्यपिशब्दार्थ. । व्यतिरेकमाह न-नैव आतुरापथ्यतुल्यं तु-ज्वरादिरोगविधुरस्य घृतादिदानसदृशं पुन' यन्मुसलहलादि तद्दायकग्राहकयोरपकारि एतद्दत्तं विधिवन्मतमभीष्टम् ॥१२४॥
अथ दानमेव स्तुवन्नाह—

धर्मस्यादिपदं दानं, दानं दारिद्र्यनाशनम् ।
जनप्रियकरं दानं, दानं कीर्त्यादिवर्धनम् ॥१२५॥

धर्मस्य-श्रेयोरूपस्य 'आदिपदं' प्रथमस्थानम् दानमुक्तलक्षणम् 'दानं दारिद्र्यनाशन'-इहपरभवयोर्लाभान्तरायकर्मोपघातेन विशिष्टलाभसम्भवाद्दौर्गत्यापोहकारि 'जनप्रियकरं'-लोकसंतोषहेतुर्दानम्, 'दानं कीर्त्यादिवर्धनं'-कीर्तिः "स्वचित्तसंतोषजननसौभाग्यादिवृद्धिहेतु."। यदत्र पुनः पुनर्दानशब्दोच्चारणं तदत्यन्तादरणीयताज्ञापनार्थमिति ॥१२५॥ अथ सदाचारमाह—

लोकापवादभीरुत्वं, दीनाभ्युद्धरणादरः ।
कृतज्ञता सुदाक्षिण्यं, सदाचारः प्रकीर्तितः ॥१२६॥

'लोकापवादभीरुत्वं'-यत. कुतोऽपि लोकापवादान्मरणान्निर्विशिष्यमाणाद् भीतभावः । 'दीनाभ्युद्धरणादर'—उपलक्षणत्वाद्दीनानाथोपकारप्रयत्न ।

'कृतज्ञता'-परकृतोपकारपरिज्ञानम्। सुदाक्षिण्यं-गम्भीरधीरचेतसो निर्मत्सरस्य च प्रकृत्यैव परकृत्याभियोगपरता। किमित्याह 'सदाचारः' प्रागुपन्यस्तः प्रकीर्तितः-प्रज्ञप्तः ॥१२६॥ तथा—

सर्वत्र निन्दासन्त्यागो, वर्णवादश्च साधुषु।
आपद्यदैन्यमत्यन्तं तद्वत्सम्पदि नम्रता ॥१२७॥

'सर्वत्र'—जघन्यमध्यमोत्तमजनेषु 'निन्दासन्त्यागः'—परिवादापनोदः 'वर्णवादश्च'-प्रशंसारूपः, 'साधुषु'-सदाचारेषु 'जनेषु आपदि'-व्यसने अदैन्यमदीनभावः अत्यन्तमतीव, तद्वदापद्यदैन्यवत् 'सम्पदि' विभवसमागमे नम्रता-औचित्येन नमनशीलता ॥१२७॥ तथा—

प्रस्तावे मितभाषित्वमविसंवादनं तथा।
प्रतिपन्नक्रिया चेति, कुलधर्मानुपालनम् ॥१२८॥

'प्रस्तावे'-भाषणावसर उपलब्धे, मितभाषित्वं-मितहितभाषणशीलता, 'अविसंवादनं'-विसंवादवतः स्ववचनस्याकरणम्। 'तथा प्रतिपन्नक्रिया चेति' प्रतिपन्नस्य व्रतनियमादेः क्रिया-निर्वाहणं, इतिः पदसमाप्तौ। कुलधर्मानुपालनं अविरुद्धस्वकुलाचारानुवर्तनम् ॥१२८॥

असद्व्ययपरित्यागः, स्थाने चैतत्क्रिया सदा।
प्रधानकार्ये निर्बन्धः, प्रमादस्य विवर्जनम् ॥१२९॥

असद्व्ययपरित्यागो-ऽसतः पुरुषार्थानुपयोगित्वेनासुन्दरस्य व्ययस्य वित्तविनियोगरूपस्य परित्यागः, स्थाने च-स्थान एव देवपूजनादौ एतत्क्रिया-व्ययक्रिया सदा सर्वकालम् 'प्रधानकार्ये'-विशिष्टफलदायिनि प्रयोजने निर्बन्धः-आग्रहः प्रमादस्य-मद्यपानादिरूपस्य विवर्जनमुज्झनम् ॥१२९॥

लोकाचारानुवृत्तिश्च, सर्वत्रौचित्यपालनम्।
प्रवृत्तिर्गर्हिते नेति, प्राणैः कण्ठगतैरपि ॥१३०॥

'लोकाचारानुवृत्तिश्च'-बहुजनरूढा विरोधिलोकव्यवहारानुपालनरूपा सर्वत्र-स्वपक्षे परपक्षे च 'औचित्यपालनं'-समुचिताचाररूपम् प्रवृत्तिर्गर्हिते -कुत्सिते कुलदूषणादौ न-नैव। इतिः प्राग्वत्। प्राणैरुच्छ्वासरूपैः कण्ठग-

नैरपि—गलस्थानप्राप्तै, किं पुन. स्वभावस्थैरित्यपिशब्दार्थः ॥१३०॥

अथ तपः प्राह—

तपोऽपि च यथाशक्ति, कर्तव्यं पापतापनम्।
तच्च चान्द्रायणं कृच्छ्रं, मृत्युघ्नं पापसूदनम् ॥१३१॥

तपो पि च-किं पुनः प्रागुक्तमनुष्ठानम् यथाशक्ति-यस्य यावती शक्ति - तया 'कर्तव्यं'-विधेयम्। कीदृशमित्याह 'पापतापनं-स्मृत्यादिप्रसिद्धं तथा-विधापराधवशसमुत्पन्नाशुभकर्मतापकारि 'तच्च'-तत्पुन' चान्द्रायणं कृच्छ्रं मृत्युघ्नं पापसूदनं इति चतुष्प्रकारम् ॥१३१॥

इदमेव श्लोकचतुष्टयेन व्याचष्टे—

एकैकं वर्धयेद् ग्रासं, शुक्ले कृष्णे च हापयेत्।
भुञ्जीत नामावास्यायामेष चान्द्रायणो विधिः ॥१३२॥

एकैक—न तु द्व्यादिरूपम् वर्धयेद्-वृद्धिमानयेत् ग्रास-कवलमन्नस्य, शुक्ले —शुक्लपक्षे प्रतिपत्तिथेरारभ्य यावत्पौर्णमास्यां पञ्चदश कवलाः। तथा कृष्णे च-कृष्णपक्षे पुनश्चतुर्दशादौ कृत्वा हापयेद्-हीनं कुर्यादेकैकं ग्रासमेवं यावत् अमावास्या, ततो 'भुञ्जीत नामावास्यायां'-तस्यां सकलकवलक्षयात्। 'एष'उक्तरूपश्चान्द्रायणः—चन्द्रेण वृद्धिभाजा क्षयभाजा च सहेयते गम्यते यत्तच्चान्द्रायण, तस्यायमिति चान्द्रायणो 'विधि.'-करणप्रकार इति। एतच्च चान्द्रायण लौकिकशास्त्रोक्तं प्रथमधार्मिकयोग्यतया चेहोपन्यस्तं लोकोत्तरं त्वित्थमन्यथा च शास्त्रान्तरादवसेयमिति ॥१३२॥

सन्तापनादिभेदेन, कृच्छ्रमुक्तमनेकधा।
अकृच्छ्रादतिकृच्छ्रेषु, हन्त सन्तारणं परम् ॥१३३॥

इह कृच्छ्रमनेकधा यथा-सन्तापनकृच्छ्र, पादकृच्छ्रं, सम्पूर्णकृच्छ्रमित्यादि। तत्र सन्तापनकृच्छ्रम्-"त्र्यहमुष्णं पिबेदम्बु, त्र्यहमुष्णं घृतं पिबेत्। त्र्यहमुष्णं पिबेन्मूत्र, त्र्यहमुष्णं पिबेत्पय. ॥१॥ तथा—एकभक्तेन भुक्तेन, तथैवाऽयाचितेन च। उपवासेन चैकेन पादकृच्छ्रं विधीयते ॥२॥" सम्पूर्णकृच्छ्र पुनरेतदेव चतुर्गुणमिति। तत' 'सन्तापनं' सन्तापनकृच्छ्रमादौ यस्य स तथा। स चासौ

भेदश्च विशेषस्तेन कृच्छ्रनामकम्, उक्तमनेकधानेकप्रकारं तप शास्त्रेषु। कीदृशमित्याह-अकृच्छ्रात्-अकृच्छ्रेण अतिकृच्छ्रेषु-नरकादिपातफलेष्वपराधेषु विषये 'हन्त' इति प्रत्यवधारणे पुनः सन्तारणं-सन्तरणहेतु पर-प्रकृष्टं प्राणिनामिति ॥१३३॥

मासोपवासमित्याहुर्मृत्युघ्नं तु तपोधना ।
मृत्युञ्जयजपोपेतं परिशुद्धं विधानत ॥१३४॥

मासं यावदुपवासो यत्र तत्तथा इत्येतत् आहुरुक्तवन्तः मृत्युघ्नं तु —मृत्युघ्ननामकं पुनस्तप. तपोधना.-तप प्रधाना मुनय। मृत्युञ्जयजपोपेतं —पञ्चपरमेष्ठिनमस्कारादिरूपं मृत्युञ्जयसंज्ञमन्त्रस्मरणसमन्वितम् परिशुद्ध-मिहलोकाशसादिपरिहारेण विधानत.-कषायनिरोधब्रह्मचर्यदेवपूजादिरूपा-द्विधानात् ॥१३४॥

पापसूदनमप्येवं तत्तत्पापाद्यपेक्षया।
चित्रमन्त्रजपप्रायं प्रत्यापत्तिविशोधितम् ॥१३५॥

पापसूदनमपि-किं पुनर्मृत्युघ्नमित्यपिशब्दार्थ' 'एवं'-परिशुद्धं विधानतश्च ज्ञेयम्। कथमित्याह—तत्तत्पापाद्यपेक्षया—तत्तच्चित्ररूपं यत्पाप साधुद्रोहादि, आदिशब्दाज्ज्ञानावरणाद्यष्टविधं कर्मापेक्ष्येति, तत्र "महुराए जउणराया, जउणावङ्के य दण्डमणगारे। वहण च कालकरणं, सक्कागमणं च पव्वजा ॥१॥" [आ. नि.] इति। अत्र कथानके दण्डानगारहन्तुर्यमुनराजस्य तत्पाप-शुद्धयर्थमङ्गीकृतप्रव्रज्यस्य साधुवधस्मरणे तद्दिनप्रतिपन्नाऽभोजनाभिग्रहस्य षण्मा-सान्यावज्जातव्रतपर्यायस्य सम्यक्सम्पन्नाराधनस्य किल न क्वचिद्दिने भोजनम-जनीति, तत् तप' तत्तत्पापापेक्षया पापसूदनमिति। कर्मसूदनतपस्तु प्रतिकर्मे-त्थमाचरित दृश्यते—उपवासै-काशनै-कसिक्थै—कस्थानकै-कदत्ति—निर्विकृतिका-चाम्ला—ष्टकवलानि। कीदृशमेतदित्याह 'चित्रमन्त्रजपप्राय'—चित्रो नाना-विध. "ओं ह्रीं अ सि आ उ सा नम." इत्यादिमन्त्रस्मरणरूपो जप प्रायो बहुलो यत्र तत्तथा। 'प्रत्यापत्तिविशोधितं' प्रत्यापत्तिस्तत्तदपराधस्थानान्म-हता संवेगेन प्रतिक्रान्तिस्तया विशोधितं विशुद्धिमानीतम् ॥१३५॥

अथ मुक्त्यद्वेषमभिधित्सुराह—

कृत्स्नकर्मक्षयान्मुक्तिर्भोगसक्लेशवर्जिता ।
भवाभिनन्दिनामस्या द्वेषोऽज्ञाननिबन्धनः ॥१३६॥

कृत्स्नकर्मक्षयाद्–निखिलमलप्रलयात्, मुक्तिः-निर्वृतिः सञ्जायते, कीदृशीत्याह 'भोगसक्लेशवर्जिता'–इन्द्रियार्थाभिष्वङ्गरूपदु खविकला । ततो भवाभिनन्दिनामत्यन्तासारमपि संसार प्रति बहुमानवतां जन्तूनाम् 'अस्यां'–मुक्तौ सर्वाङ्गसुखखानिभूतायां, केषाचिद्यो 'द्वेषो'–मत्सरः, सोऽज्ञाननिबन्धनो–मुक्तिस्वरूपपरिज्ञाननिमित्तः । न हि स्वभावसुन्दरे वस्तुनि तथैव च ज्ञाते कश्चिद्विपश्चिद् द्वेषं प्रतिपद्यत इति ॥१३६॥

न च वक्तव्यं असौ द्वेषोऽसम्भव्येव इत्याशंक्याह—

श्रूयन्ते चैतदालापा लोके तावदशोभनाः ।
शास्त्रेष्वपि हि मूढानामश्रोतव्या सदा सताम् ॥१३७॥

श्रूयन्ते–आकर्ण्यन्ते चकारः पूर्वोक्तभावनार्थः एतदालापा–मुक्तिद्वेषवचनानि लोके–सव्यवहारार्हे जने तावच्छब्दः क्रमार्थः 'अशोभना'–अश्रेयोरूपा. । तथा च पठन्ति-†जइ तत्थ नत्थि सीमंतिणीओ मणहरपियंगुवन्नाओ । ता रे सिद्धन्तिय ! बन्धणं खु मोक्खो न सो मोक्खो ॥१॥ तथा 'शास्त्रेष्वपि हि'–तथाविधस्मृतिपुराणरूपेषु 'किं पुनर्लोक' इत्यपिहीतिशब्दार्थ. 'मूढानां' तत्त्वं प्रति व्यामोहवतां शास्त्रकृताम् कीदृशा इत्याह.–'अश्रोतव्या'–श्रोतुमनर्हा. 'सदा'–सर्वकाले 'सता'–शिष्टानाम् ॥१३७॥ एतदेव दर्शयति—

वर वृन्दावने रम्ये क्रोष्टुत्वमभिवाञ्छितम् ।
न त्वेवाऽविषयो मोक्ष कदाचिदपि गौतम ! ॥१३८॥

वर–प्रधानम् वृन्दावने–यमुनानदीतटवर्तिनि मथुरोपवनविशेषे रम्ये–रमणीये क्रोष्टुत्वं–शृगालत्वम् अभिवाञ्छितं अभिलषितम्, न त्वेव–नैव पुन. अविषय–कयाचित्क्रियया भावयितुमयोग्य. मोक्षो–ऽपवर्ग. ।

---

† "यदि तत्र नास्ति सीमन्तिन्यो मनोहरप्रियंगुवर्णा. ।
तत् रे ! सिद्धान्तिक ! बंधन खलु मोक्षो न स मोक्ष. ॥१॥"

कदाचिदपि—क्वाप्यवस्थाविशेषे वाञ्छित.। 'गौतम !' इति गालवेन निज-शिष्यविशेषस्यामन्त्रण कृतमिति ॥१३८॥

महामोहाभिभूतानामेवं द्वेषोऽत्र जायते ।
अकल्याणवता पुंसा तथा ससारवर्धनः ॥१३९॥

महामोहाभिभूतानामतिनिबिडमिथ्यात्वादिमोहनीयविपाकविसस्थुलानाम् एवमुक्तप्रकारेण द्वेषोऽत्र-मुक्तौ जायते । अकल्याणवता—संमुखीभूतातिप्रभूताशुभानां पुंसाम् 'तथा ससारवर्धन' तथा तत्प्रकारस्यानन्तकालप्रमितस्य समारस्य वर्धनो वृद्धिहेतु. ॥१३९॥ विपर्यये गुणमाह—

नास्ति येषामयं तत्र तेऽपि धन्या प्रकीर्तिताः ।
भवबीजपरित्यागात् तथा कल्याणभागिनः ॥१४०॥

न—नैव अस्ति—विद्यते येषां—भव्यविशेषाणाम् अयं—द्वेषः तत्र—मुक्तौ तेऽपि—किं पुनस्तत्रानुरागभाज इत्यपिशब्दार्थः । धन्या-धर्मधनलब्धारः प्रकीर्तिता.। पुनरपि कीदृशा इत्याह 'भवबीजपरित्यागाव'—मनाक् स्वगत-ससारयोग्यतापरिहाणे. सकाशात्, तथा—तेन प्रकारेण चरमपुद्गलपरिवर्त-व्यवधानादिना 'कल्याणभागिन.'—तीर्थकरादिपदप्राप्तिद्वारेण शिवशर्मभाज इति ॥१४०॥ किं च—

सज्ज्ञानादिश्च यो मुक्तेरुपायः समुदाहृतः ।
मलनायैव तत्रापि न चेष्टैषा प्रवर्तते ॥१४१॥

'सज्ज्ञानादिश्च' सम्यग्ज्ञानदर्शनचारित्ररूप· पुनः यो मुक्तेर्निर्वृतेः उपाय.—पन्था·, समुदाहृत·—तीर्थकरै. प्रज्ञप्त., तस्य 'मलनायैव'—विनाश-निमित्तमेव किं तु कदाराधनार्थमपि, तत्रापि—तस्मिन्नपि मुक्त्यद्वेषे सति किं पुनस्तदनुराग इत्यपिशब्दार्थ. न—नैव चेष्टा—मनोवाक्कायप्रवृत्तिरूपा एषा—मुक्त्यद्वेषवतां जन्तूनाम् प्रवर्तते—समस्ति ॥१४१॥

अथ मुक्त्युपायस्यैवाऽमलनादृष्टान्तात् मलनाया. फलमाह—

स्वाराधनाद्यथैतस्य फलमुक्तमनुत्तरम् ।
मलनातस्तवनर्थोऽपि महानेव तथैव हि ॥१४२॥

स्वाराधनाद्-विधिवदनुवर्तनात् यथा–येन प्रकारेण, एतस्य मुक्त्युपायस्य फल–कार्यम्, उक्तमनुत्तर–सर्वफलातिशायि। मलनातस्तु–मलनायाः सकाशात्पुन मुक्त्युपायस्यैव अनर्थोपि, किं पुनराराधनातोऽनुत्तर फलमित्यपिशब्दार्थः। महानेव–नरकादिपातरूप। तथैव हि–स्वाराधनाफलप्रकारेणैव ॥१४२॥ एतदेव भावयति—

उत्तुङ्गारोहणात्पातो विषान्नात्तृप्तिरेव च।
अनर्थाय यथात्यन्तं मलनापि तथेक्ष्यताम् ॥१४३॥

उत्तुङ्गारोहणा पर्वतशिखराद्यध्यासनात्, पातोऽधस्तात्पतनम्. विषान्नाद्विषमिश्रभोजनात्, तृप्तिरेव च–तृप्तिश्च, अनर्थायाऽकल्याणाय यथा–येन प्रकारेण, अत्यन्तं, मलनापि मुक्त्युपायस्य, तथेक्ष्यतां अवलोक्यतामिति ॥१४३॥ एतदेव समर्थयमान आह—

अत एव च शस्त्राग्निव्यालदुर्ग्रहसन्निभः।
श्रामण्यदुर्ग्रहोऽस्वन्तः शास्त्र उक्तो महात्मभिः ॥१४४॥

अत एव-मुक्त्युपायमलनस्यानर्थहेतुत्वादेव हेतो, चकार पूर्वोक्तभावनार्थं, शस्त्राग्निव्यालदुर्ग्रहसन्निभ.–शस्त्रस्य–क्षुरिकादे, अग्नेः प्रतीतरूपस्य, व्यालस्य च दुष्टश्वापदभुजगलक्षणस्य यो दुर्ग्रहो–दुर्ग्रहीतत्वं तेन सन्निभ.–सदृशः। क इत्याह श्रामण्यदुर्ग्रह.–असम्यक्कृतदङ्गीकार., अस्वन्त–असुन्दरपरिणाम., शास्त्रे–योगस्वरूपनिरूपके ग्रन्थे, उक्त.–निरूपित, महात्मभिः–पूर्वमुनिभि। तथा च पठन्ति–*जह चेव उ मोक्खफला, आणा आराहिया जिणिन्दाण। ससारदुक्खफलया, तह चेव विराहिया नवर ॥१॥

ननु दुर्गृहीतादपि श्रामण्यात् सुरलोकलाभो भवति, अत कथमस्याऽस्वन्ततेत्याशङ्क्याह–ग्रैवेयक इत्यादि—

ग्रैवेयकाप्तिरप्येवं नातः श्लाघ्या सुनीतितः।
यथाऽन्यायार्जिता सम्पद् विपाकविरसत्वतः ॥१४५॥

---

*"यथैव तु मोक्षफला आज्ञा आराधिता जिनेन्द्राणां।
संसारदुखफलदा तथैव विराधिता नवरम् ॥१॥"

ग्रैवेयकाप्तिरपि–शुद्धसमाचारवत्सु साधुषु चक्रवर्त्यादिभिः परपुरुषैः पूज्यमानेषु दृष्टेषु सम्पन्नतत्पूजास्पृहाणा तथाविधान्यकारणवता च केषाञ्चिद्व्यापन्नदर्शनानामपि प्राणिना या नवमग्रैवेयकप्राप्तिः किं पुनः शेषसुरस्थानाप्तिरित्यपिशब्दार्थ एवमस्वन्तत्वेन न–नैव अतो–दुर्गृहीतश्रामण्यात् श्लाघ्या–प्रशंसनीया सुनीतित –परिणामविमर्शकनिचारात । अत्र दृष्टान्तमाह 'यथाऽन्याऽर्जिता'–चौर्यद्यूतरमणस्वामिद्रोहादिनाऽन्यायेन लब्धा सम्पत्–विभूतिर्न श्लाघ्या । कुत इत्याह विपाकविरसत्वतः–परिणतिविरसभावात् । ते हि ग्रैवेयकेभ्यश्च्युता निर्वाणबीजस्यैकान्तेनाऽसत्त्वेनेहोदीर्णदुर्निवारमिथ्यात्वादिमोहा अत एव सर्वेष्वप्यकार्येष्वस्खलितप्रवृत्तयो नरकादिपातहेतुमुपार्ज्य पापप्राग्भार पश्चादधस्तान्नरकभाजो भवन्तीति ॥१४५॥ अथ व्यापन्नदर्शनानामप्यखण्डद्रव्यश्रामण्यपरिपालनातो या नवमग्रैवेयकप्राप्तिः, तत्रापि मुक्त्यद्वेष एव कारणमित्यभिधातुकामः प्राह—

अनेनापि प्रकारेण द्वेषाभावोऽत्र तत्त्वत ।
हितस्तु यत्तदेतेऽपि तथाकल्याणभागिन ॥१४६॥

अनेनापि प्रकारेण–लब्धिपूजाद्यर्थत्वरूपेण कि पुनरितरथेत्यपिशब्दार्थः द्वेषाभावो–मुक्त्यमत्सरः अत्र–द्रव्यश्रामण्ये तत्त्वत–ऐदम्पर्यात् 'हितस्तु'–हितः, पुनर्न तु द्रव्यक्रियैष यद्यस्मात्कारणात् तत्तस्मात् एतेऽपि–द्रव्यश्रामण्यभाजः किं पुनस्तदन्य इत्यपिशब्दार्थ तथाकल्याणभागिन –ग्रैवेयकाद्युत्पत्तिरूपश्रेय स्थानभाजनमिति ॥१४६॥ अथ प्रस्तुतमेवाधिकृत्याह—

येषामेवं न मुक्त्यादौ द्वेषो गुर्वादिपूजनम् ।
त एव चारु कुर्वन्ति नान्ये तद्गुरुदोषत ॥१४७॥

येषां–भव्यविशेषाणाम् एव–चरमपुद्गलावर्तवर्तित्वेन न–नैव मुक्त्यादौ मुक्तौ मुक्त्युपाये मुक्तिपथप्रस्थितेषु च जनेषु द्वेषो–मत्सरः । गुर्वादिपूजन योगपूर्वसेवास्वभावम् त एव मुक्त्याद्यद्वेषिण 'चारु' विधिसमन्वित कुर्वन्ति व्यवच्छेद्यमाह 'नान्ये'–मुक्त्यादिद्वेषिण कुत इत्याह 'तद्गुरुदोषत' स मुक्त्यादिद्वेषलक्षणो गुरुर्महान् यो दोषस्तस्मात् ॥१४७॥ एतदेव भावयति—

सच्चेष्टितमपि स्तोकं गुरुदोषवतो न तत् ।
भौतहन्तुर्यथाऽन्यत्र पादस्पर्शनिषेधनम् ॥१४८॥

सच्चेष्टितमपि—सुन्दरमपि चेष्टितमनुष्ठानम् गुरुदोषवतः—सच्चेष्टितापेक्षया बृहदपराधसमन्वितस्य । न—नैव तत्सच्चेष्टितं वर्तते । दृष्टान्तमाह भौतहन्तु-भौतानां भस्मवृत्तीना हन्तुर्घातकस्य 'यथा' इति दृष्टान्तार्थः. अन्यत्र सच्चेष्टिते कर्तव्ये पादस्पर्शनिषेधन—पादस्पर्शस्य चरणसङ्घट्टनरूपस्य निषेधनं हन्तव्यान् भौतान्प्रतीत्येति । तथाहि—"किल कस्यचिच्छबरस्य कुतोऽपि प्रस्तावात् 'तपोधनानां पादेन स्पर्शनं महतेऽनर्थाय सम्पद्यते' इतिश्रुतधर्मशास्त्रस्य कदाचिन्मयूरपिच्छै प्रयोजनमजायत । यदासौ निपुणमन्यत्रान्वेषमाणो न लेभे तदा श्रुतमनेन यथा भौतसाधुसमीपे तानि सन्ति । ययाचिरे च तानि तेभ्यः पर न किंचिल्लेभे ततोऽसौ शस्त्रव्यापारपूर्वकं तान्निगृह्य सग्राह तानि, पादेन स्पर्शं च परिहृतवान्" यथास्य पादस्पर्शपरिहारो गुणोऽपि शस्त्रव्यापारे-णोपहतत्वान्न गुण. किं तु दोषः, एवं मुक्तिद्वेषिणां गुरुदेवादिपूजनं योजनीय-मिति ॥१४८॥ एतदेवाह—

गुर्वादिपूजनान्नेह तथा गुण उदाहृत. ।
मुक्त्यद्वेषाद्यथात्यन्त महापायनिवृत्तित ॥१४९॥

गुर्वादिपूजनादुक्तरूपात्सकाशात् न—नैव इह—पूर्वसेवायाम् 'तथा गुण' पूजकोपकार. उदाहृतो—मतिमद्भि. । मुक्त्यद्वेषाद्—गुर्वादिपूजाभावेऽपि यथात्यन्तमतीव गुणो, महापायनिवृत्तितो—महापायस्य ससारनामकस्याऽ-पारस्य पारकरणान्निवृत्ते. ॥१४९॥

भवाभिष्वङ्गभावेन तथाऽनाभोगयोगतः ।
साध्वनुष्ठानमेवाहुर्नैतान् भेदान् विपश्चितः ॥१५०॥

भवाभिष्वङ्गभावेन—भवप्रतिबन्धसत्तया द्वयोरनुष्ठानयो 'तथा' इति हेत्वन्तरसमुच्चये अनाभोगयोगतः—संमूर्छनजप्रवृत्तितुल्यतयाऽऽभोगविरहा-देकत्रानुष्ठाने किमित्याह साध्वनुष्ठानमेव—परिपूर्णयत्यनुष्ठानमेव परिपूर्ण-यत्यनुष्ठानमपि सदा आहु—ब्रुवते न—नैव साध्वनुष्ठानतयेति गम्यते ।

कानित्याह 'एतान्' वक्ष्यमाणान्, 'भेदान्' अनुष्ठानविशेषांस्त्रीन्विषादीन्, विपश्चितः-विद्वांस', एकान्तेनैव द्रव्यानुष्ठानत्वात्तेषामिति ॥१५०॥

अमुमेवार्थं भावयन्नाह—

इहामुत्रफलापेक्षा, भवाभिष्वङ्ग उच्यते ।
तथाऽनध्यवसायस्तु स्यादनाभोग इत्यपि ॥१५१॥

इह— मनुष्यभवे अमुत्र—स्वर्गादौ 'फलापेक्षा'—इह कीर्त्यादेरमुत्र च सुरविभूत्यादे फलापेक्षा स्पृहारूपा किमित्याह—भवाभिष्वङ्ग-उक्तरूप, उच्यते -निगद्यत इति, 'तथा' इति समुच्चये । अनध्यवसायस्तु विधीयमानानुष्ठानो-चिताध्यवसायाभाव. पुन. स्याद्-भवेत् 'अनाभोगो' य प्रागुक्त. 'इत्यपि' एष एवेति ॥१५१॥ तत. किमित्याह—

एतद्युक्तमनुष्ठानमन्यावर्तेषु तद्ध्रुवम् ।
चरमे त्वन्यथा ज्ञेयं सहजाल्पमलत्वत ॥१५२॥

एतद्युक्तं-भवाभिष्वङ्गानाभोगसङ्गतम्, अनुष्ठानं-गुरुदेवादिपूजनरूपम् अन्यावर्तेषु-चरमावर्तविलक्षणेषु, तत्पूर्वसेवारूपतयोपन्यस्तम् ध्रुवं-निश्चितम् चरमे तु-चरमे पुन. परावर्ते अन्यथा-ऽन्यप्रकार ज्ञेयम्, कुत इत्याह 'सहजा-ल्पमलत्वत'-स्वाभाविककर्मबन्धयोग्यतालक्षणमलतुच्छभावात ॥१५२॥

ततोऽपि किमित्याह—

एकमेव ह्यनुष्ठानं कर्तृभेदेन भिद्यते ।
सरुजेतरभेदेन भोजनादिगतं यथा ॥१५३॥

एकमेव ह्येकाकारमेव-अनुष्ठानं-देवतापूजनादि कर्तृभेदेन-चरमाऽचरमा-वर्तवर्तितया कारकजन्तुनानात्वेन भिद्यते—विशिष्यते । दृष्टान्तमाह-सरुजेतर-भेदेन, भोजनादिगतं-भोजनपानशयनासनादिगतं, यथा-येन प्रकारेण एतस्य रोगवृद्धिहेतुत्वादन्यस्य च बलोपचयार्थत्वादिति ॥१५३॥ एतदेव दृढयन्नाह—

इत्थं चैतद्यत. प्रोक्तं सामान्येनैव पञ्चधा ।
विषादिकमनुष्ठानं विचारेऽत्रैव योगिभि. ॥१५४॥

इत्थमिदम्प्रकारम् 'चकार.' पूर्वोक्तभावनार्थः एतदनुष्ठानभेदलक्षणं वस्तु यतो-यस्मात्, प्रोक्तम् सामान्येनैव न तु चरमाऽचरमावर्तभेदमपेक्ष्य पञ्चधा-पञ्चभि प्रकारै., विषादिकं-विषगरादिभेदमनुष्ठान प्रस्तुतमेव विचारे-पर्यालोचने अत्रैवा-ऽस्मिन्नेव योगमते पतञ्जलिप्रभृतिभिः योगिभिः ॥१५४॥ इदमेव दर्शयति—

विषं गरोऽननुष्ठानं तद्धेतुरमृत परम् ।
गुर्वादिपूजानुष्ठानमपेक्षादिविधानतः ॥१५५॥

विषं-स्थावरजङ्गमभेदभिन्नम् ततो विषमिव विषम्, एवं गरोऽपि योजनीय. पर गरः-कुद्रव्यसयोगजो विषविशेष., अननुष्ठान—अननुष्ठाना-भासम् , तथा तद्धेतुरनुष्ठानहेतु , अमृतमिवामृतममरणहेतुत्वात । पर-प्रकृष्ट, गुर्वादिपूजानुष्ठानम् प्रकृतमेव वर्तते। कुत इत्याह अपेक्षादिविधानत.-अपेक्षाया इहलोकपरलोकफलस्पृहानुरूपाया आदिशब्दादनाभोगादेश्च यद्विधानं विशेषस्तस्मात् ॥१५५॥ विषादित्वमेव भावयन्नाह—

विषं लब्ध्याद्यपेक्षात इदं सचित्तमारणात् ।
महतोऽल्पार्थनाज्ज्ञेय लघुत्वापादनात्तथा ॥१५६॥

विषं लब्ध्याद्यपेक्षातो-लब्धिकीर्त्यादिस्पृहालक्षणायाः सकाशात , इद-मनुष्ठानं वर्तते। कुत इत्याह सच्चित्तमारणात—परिशुद्धान्त.करणपरिणामवि-नाशनात् महतो-ऽनुष्ठानस्य अल्पार्थनाद्-अतितुच्छलब्ध्यादिस्पृहणात्सकाशात लघुत्वापादनं-लघुभावाधान तस्मात् । 'तथा' इति हेत्वन्तरभावनार्थ । ज्ञेयमिदं विषमिति ॥१५६॥

दिव्यभोगाभिलाषेण, गरमाहुर्मनीषिण. ।
एतद्विहितनीत्यैव कालान्तरनिपातनात् ॥१५७॥

दिव्यभोगाभिलाषेण-ऐहिकभोगनि स्पृहस्य स्वर्गस्थानभवभोगाभिष्वङ्ग-रूपेण गरमनुष्ठानम् आहुर्मनीषिणो मतिमन्त. एतद्देवादिपूजाद्यनुष्ठानम 'विहितनीत्यैव'-सच्चित्तमारणादिरूपयैव, पर कालान्तरनिपातनात्कालान्तरे-

भवभवान्तररूपेऽनर्थसम्पादनाद् आत्मन. किल विष सद्य एव विनाशहेतुः गरश्च कालान्तरेणेत्येवमुपन्यस्तमिति ॥१५७॥

अनाभोगवतश्चैतदननुष्ठानमुच्यते ।
सम्प्रमुग्धं मनोऽस्येति ततश्चैतद्यथोदितम् ॥१५८॥

अनाभोगवतश्च इहलोकपरलोकयोरपि सम्मूर्छनजतुल्यप्रवृत्तितया क्वचिदप्रणिहितमनसः पुनः पुसः 'एतद्' गुरुदेवपूजाद्यनुष्ठानं तथाविधस-मुदयादिवशाद्विधीयमानमपि अननुष्ठानमुच्यते–अनुष्ठानमेव न भवतीत्यर्थ । कुन एतदित्याह 'सम्प्रमुग्ध–स इति सर्वत. प्रकर्षेण मुग्ध सन्निपातोपहतस्येव मोहमनध्यवसायमात्ररूपमापन्नं मन'-अन्त.करण अस्य-अनाभोगवतः 'इति.' पादपरिसमाप्तौ । अत एवं 'ततश्च' मन.सम्प्रमोहादेव हेतो. एतद्या-शुक्तम् 'यथोदितं'–यथा निरूपित तथैवेति ॥१५८॥

एतद्रागादिदं हेतु श्रेष्ठो योगविदो विदुः ।
सदनुष्ठानभावस्य शुभभावांशयोगत. ॥१५९॥

एतद्रागात्–सदनुष्ठानभावबहुमानात् इद आदिधार्मिककालभावि देव-पूजाद्यनुष्ठान क्रियमाणम् हेतुः–कारणम् श्रेष्ठो–ऽवन्ध्यो वर्तते एतद्योग-विदो विदु.–जानते, कस्य हेतुरित्याह 'सदनुष्ठानभावस्य'–तात्त्विकदेवपूजा-द्याचारपरिणामस्य । कुत इत्याह 'शुभभावांशयोगत.'–मुक्त्यद्वेषेण मनाग्मु-क्त्यनुरागेण वा शुभभावलेशसङ्गमात् ॥१५९॥

जिनोदितमिति त्वाहुर्भावसारमद पुन ।
सवेगगर्भमत्यन्तममृतं मुनिपुङ्गवा ॥१६०॥

जिनोदितं–जिननिरूपित 'इति तु' अनेनैवाभिप्रायेण विधीयमानं आहुर्ब्रुवते 'भावसार'–शुद्धश्रद्धाप्रधानम् । अदोऽनुष्ठान पुन. तथा सवेगग-र्भमन्त.प्रवेशितनिर्वाणाभिलाषम् अत्यन्तमतीव अमृतममरणहेतुत्वादमृतसंज्ञम् 'मुनिपुङ्गवा'–गौतमादिमहामुनय इति ॥१६०॥ अथ प्रस्तुतमेवाधिकृत्याह—

एवं च कर्तृभेदेन चरमेऽन्यादृशं स्थितम् ।
पुद्गलाना परावर्ते गुरुदेवादिपूजनम् ॥१६१॥

एवं चा-ऽस्मिंश्चानुष्ठानपञ्चविधत्वे स्थिते सति कर्तृभेदेना-ऽनुष्ठातृविशेषेण चरमे-ऽपश्चिमे अन्यादृश-मुक्त्यद्वेषादेः पूर्वपरावर्तकालभाविनो देवदिपूजनाद्विलक्षणम् स्थितं-प्रतिष्ठितम् पुद्गलानां परावर्ते गुरुदेवादिपूजनमुक्तरूपमेवेति ॥१६१॥ एतदेव समर्थयति—

यतो विशिष्ट. कर्ताय तदन्येभ्यो नियोगतः ।
तद्योगयोग्यताभेदादिति सम्यग्विचिन्त्यताम् ॥१६२॥

यत-यस्मात्कारणात विशिष्टो-विलक्षण' कर्ता-देवपूजनादीनाम् अय-चरमावर्तवर्ती जन्तु. तदन्येभ्य.-प्राच्यपरावर्तवर्तिभ्य कर्तृभ्य., नियोगतो-नियमेन । कुत इत्याह 'तद्योगयोग्यताभेदात्'-स चासौ योगयोग्यतायाः योगनिमित्तभावस्य भेदो विशेषस्तस्मात् इतिः-एवम् सम्यग्विचिन्त्यतां-विमृश्यतामिति । पूर्वं ह्येकान्तेन योगाऽयोग्यस्यैव देवादिपूजनमासीच्चरमावर्ते तु समुल्लसितयोगयोग्यभावस्येति चरमावर्तदेवादिपूजनस्यान्यावर्तदेवादिपूजनादन्यादृशत्वमिति ॥१६२॥ एतेषु च यच्चरमावर्ते स्यात्तदाह—

चतुर्थमेतत्प्रायेण ज्ञेयमस्य महात्मनः ।
सहजाल्पमलत्व तु, युक्तिरत्र पुरोदिता ॥१६३॥

चतुर्थ-तुरीयम्, एतदनुष्ठान-तद्धेतुनामकम् प्रायेण-बाहुल्येन ज्ञेयमस्य चरमावर्तभाज आदिधार्मिकस्य महात्मन.-प्रशस्तभावस्य, अनाभोगादिभ्य कदाचिदन्यथापि स्यादिदमिति प्रायोग्रहणम् । एतदपि कुतः, यत. 'सहजाल्पमलत्वं तु'-सहजो जीवसमानकालभावित्वेनाल्पस्तुच्छो मलो वक्ष्यमाणरूपो यस्य स तथा तद्भावस्तत्त्वं पुन युक्ति.-हेतु' अत्रा-ऽस्मिन्नर्थे पुरोदिता प्रागुपन्यस्तेति ॥१६३॥ अथ मलमेवाधिकृत्याह—

सहजं तु मलं विद्यात् कर्मसम्बन्धयोग्यताम् ।
आत्मनोऽनादिमत्त्वेऽपि नायमेना विना यत' ॥१६४॥

सहजं तु-सहजं पुन., मल विद्याज्जानीयात् कामित्याह कर्मसम्बन्धयोग्यता-ज्ञानवरणादिकर्मसश्लेषनिमित्तभावम् कस्येत्याह आत्मन जीवस्य । कुत इत्याह 'अनादिमत्त्वेऽपि' बन्धस्य, न-नैव, अयं-बन्ध, एनां-योग्यता

जीवस्य विना अन्तरेण, यतः—यस्मात्कारणात्। किलानादिमान् भावो गगनादिर्न कञ्चन हेतुं स्वस्वभावलाभेऽपेक्षते, बन्धश्च प्रवाहापेक्षयैवानादिमान्, ततो न जीवयोग्यतामन्तरेणैष उपपद्यते, अन्यथाऽनेकदोषप्रसङ्गात् ॥१६४॥

एतदेव दर्शयति—

अनादिमानपि ह्येष बन्धत्वं नातिवर्तते।
योग्यतामन्तरेणापि भावेऽस्यातिप्रसङ्गता ॥१६५॥

अनादिमानपि हि—आदिभूतबन्धकालविकलोऽपि प्रवाहापेक्षया किं पुनर्व्यक्तिमपेक्ष्यादिमानित्यपिहिशब्दार्थः एष बन्ध बन्धत्व—जीवेन गृह्यमाणकार्मणवर्गणापुद्गलरूपतया कृतकत्वम् नातिवर्तते—ऽतिक्रामति। ततो यो यो बन्धः स स वक्ष्यमानयोग्यतामपेक्षते, यथा वस्त्रकम्बलादीनां मञ्जिष्ठालाक्षादिरागरूपः, बन्धश्च जीवस्य कर्मण संयोग, तस्मादवश्य तयोर्योग्यतामपेक्षत इति। अत्रैव विपक्षे बाधामाह—योग्यता—योगकषायपरिणतिरूपाम्, अन्तरेणापि—विना 'किं पुन' प्राच्यप्राच्यतरादिबन्धमि'त्यपिशब्दार्थ. भावे—सत्तायाम् अस्य—बन्धस्याभ्युपगम्यमाने, अतिप्रसगता—ऽतिव्याप्ते सत्वमिति ॥१६५॥ इदमेव भावयति—

एवं चानादिमान्मुक्तो योग्यताविकलोऽपि हि।
बध्येत कर्मणा न्यायात् तदन्याऽमुक्तवृन्दवत् ॥१६६॥

एवं चातिप्रसगे च सति अनादिमान्मुक्त.-सदाशिवरूप. परपरिकल्पित किमित्याह 'योग्यताविकलोऽपि हि' प्रस्तुतयोग्यतारहित. किं पुनस्तद्युक्त इत्यपिहिशब्दार्थ'। बध्येत—पारवश्यमानीयेत, कर्मणा—अदृष्टरूपेण, न्यायात्—योग्यतावैकल्याविशेषलक्षणात्। दृष्टान्तमाह 'तदन्यामुक्तवृन्दवत्'—तस्मादनादिमतो मुक्ताद्यदन्यदमुक्तवृन्दं संसारिजीवलक्षणं तद्वत् ॥१६६॥

तदन्यकर्मविरहाद् न चेत्तद्बन्ध इष्यते।
तुल्ये तद्योग्यताभावे ननु किं तेन चिन्त्यताम् ॥१६७॥

अत्र पर.—तदन्यकर्मविरहात् तस्मात्सप्रतिबद्धुमिष्टाद्यदन्यत्प्राक्कालबद्धं कर्म तद्विरहात्, नचेद्यदि तद्बन्धस्तस्याऽनादिमतो मुक्तस्य बन्ध

इष्यतेऽभिमन्यते आचार्थं तुल्ये समाने सर्वजन्तुषु तद्योग्यताऽभावे कर्मबन्धयोग्यताया विरहे 'ननु' इति परपक्षाक्षमायाम्, किं प्रयोजनं 'तेन'-प्राच्यकर्मबन्धविरहेणोत्तरतया परिकल्पितेन चिन्त्यतां-परिभाव्यतामेतत्। अयमभिप्राय.-यदि योग्यतामन्तरेणापि शेषसंसारिणा कर्मबन्धोऽभ्युपगम्यते तदाऽनादिमुक्तेऽपि सोऽस्तु, उभयत्रापि योग्यताविरहाऽविशेषात् ॥१६७॥ अथोपसंहरन्नाह—

तस्मादवश्यमेष्टव्या स्वाभाविक्येव योग्यता।
तस्यानादिमती सा च मलनान्मल उच्यते ॥१६८॥

तस्मादनादिमुक्तकर्मबन्धप्रसंगाद्धेतो. अवश्यं-नियमेन एष्टव्या 'स्वाभाविक्येव'-स्वभावभूतैव, योग्यता-कर्मबन्धं प्रति तस्यात्मनः अनादिमती-अनादिकालप्रवृत्ता, सा च-योग्यता पुन. मलनात्-जीवस्वभावविष्कम्भणात्, 'मल उच्यत' इति ॥१६८॥ एनामेव तन्त्रान्तरमताविष्करणेन समर्थयमान आह—

दिदृक्षाभवबीजादिशब्दवाच्या तथा तथा।
इष्टा चान्यैरपि ह्येषा मुक्तिमार्गावलम्बिभि ॥१६९॥

पुरुषस्य प्रकृतिविकारान्द्रष्टुमिच्छा 'दिदृक्षा' साङ्ख्यानां, 'भवबीजं' शैवाना, भ्रान्तिरूपाऽविद्या वेदान्तिकानां, अनादिक्लेशरूपा 'वासना' सौगतानां, ततो दिदृक्षाभवबीजादिभि शब्दैरुच्यते या सा तथा तथा तेन तेन दर्शनभेदप्रकारेण इष्टा चाभिमतैव। अन्यैरप्यस्मद्विलक्षणै किं पुनरस्माभिरित्यपिहिशब्दार्थ., एषा-कर्मबन्धयोग्यता मुक्तिमार्गावलम्बिभिर्निर्वृतिपुरपथप्रस्थितैरिति ॥१६९॥ एवं सति यत्सिद्धं तदाह—

एवं चापगमोऽप्यस्या प्रत्यावर्तं सुनीतित ।
स्थित एव तदल्पत्वे भावशुद्धिरपि ध्रुवा ॥१७०॥

एवं चास्यां च कर्मबन्धयोग्यताया सत्याम् 'अपगमोऽपि'-व्यावृत्तिरूपोऽनपगमस्तावदस्त्येवेत्यपिशब्दार्थ अस्या योग्यताया, प्रत्यावर्तं प्रतिपुद्गलपरावर्तं नैकस्मिन्नेव चरमावर्त इत्यर्थ 'सुनीतितो'-दोषाणां क्रमह्रासल-

क्षगास्सन्न्यायात् स्थित एव प्रतिष्ठित एव, ततस्तदल्पत्वे–मलाल्पत्वे 'भावशुद्धिरपि'–परिणतिनिर्मलता, किं पुनः प्रत्यावर्तं मलापगम इत्यपिशब्दार्थः ध्रुवा–निश्चिता स्थिता, अन्यथा मलापगमस्यैवाभावादिति ॥१७०॥

ततः शुभमनुष्ठानं सर्वमेव हि देहिनाम् ।
विनिवृत्ताग्रहत्वेन तथाबन्धेऽपि तत्त्वतः ॥१७१॥

ततो भावशुद्धेः सकाशात्, शुभं श्रेयस्कार्यनुष्ठानं धर्मार्थादिगोचरं 'सर्वमेव' 'हि' स्फुटम् देहिनां–शरीरभाजाम् । केनेत्याह 'विनिवृत्ताग्रहत्वेन' व्यावृत्तात्यन्तवितथाभिनिवेशभावेन तथाबन्धेऽपि–तत्प्रकाराल्पाल्पतरबन्धसद्भावे किं पुनस्तस्याप्यभाव इत्यपिशब्दार्थः, तत्त्वतो–निश्चयवृत्त्या जायत इति ॥१७१॥

नात एवाणवस्तस्य प्राग्वत्संक्लेशहेतवः ।
तथान्तस्तत्त्वसंशुद्धेरुदग्रशुभभावतः ॥१७२॥

न–नैव अत एव–विनिवृत्ताग्रहत्वादेव, अणवो–ज्ञानावरणादिकर्माणवः तस्य चरमपुद्गलपरावर्तवर्तिनो जन्तोः प्राग्वत्प्राच्यपरावर्तेष्विव । संक्लेशहेतवो–मालिन्यनिबन्धना जायन्ते 'तथा' इति हेत्वन्तरसमुच्चये । अन्तस्तत्त्वसंशुद्धेरन्तस्तत्त्वमात्मा तस्य 'संशुद्धेः'–स्वभावभूतमलक्षयात्, य 'उदग्र' उत्कट, शुभो भावस्तस्मात् ॥१७२॥ अयं चास्य तथाविधकर्मबन्धो भवन्नपि न तथाविधभयाय सम्पद्यत इति दर्शयन्नाह—

सत्साधकस्य चरमा समयाऽपि विभीषिका ।
न खेदाय यथात्यन्तं तद्वदेतद्विभाव्यताम् ॥१७३॥

सत्साधकस्य–तथाविधां विद्यां सम्यक्साधयितुं प्रवृत्तस्य पुंसः चरमा–पर्यन्तवर्तिनी समयापि–सन्निहिताऽपि, बिभीषिका-वेतालादिदर्शनरूपा न खेदाय-श्रमाय यथाऽत्यन्तं–अतीव, तद्वत्साधकचरमबिभीषिकावत् एतच्चरमावर्तकर्मबन्धरूपवस्तु विभाव्यतां–विमृश्यताम् । विवेकवता प्रधानानागतवस्तुप्रतिबन्धाच्चेतस इति ॥१७३॥ दृष्टान्तमेवाधिकृत्याह—

सिद्धेरासन्नभावेन यः प्रमोदो विजृम्भते ।
चेतस्यस्य कुतस्तेन खेदोऽपि लभतेऽन्तरम् ॥१७४॥

सिद्धेर्विद्याविवशीभावस्य आसन्नभावेन-सन्निहितत्वेन 'य.' कश्चिन्निर्दे॒ष्टुमशक्य. प्रमोदो-हर्ष. विजृम्भते-समुच्छलति चेतस्यन्तःकरणे अस्य सत्साधकस्य 'कुत' कस्माद्धेतो' तेन-प्रमोदविजृम्भणेन 'खेदोऽपि' यः प्रागत्यसद्रूपतयोक्त, प्रमोदस्तावज्जृम्भत एवेत्यपिशब्दार्थः लभते-प्राप्नोति, अन्तरं-अवकाशमिति ॥१७४॥ अथ दार्ष्टान्तिकमधिकृत्यैतद्विशेषमाह—

न चेयं महतोऽर्थस्य सिद्धिरात्यन्तिकी न च ।
मुक्ति. पुनर्द्वयोपेता सत्प्रमोदास्पदं ततः ॥१७५॥

न च-नैव इय-विद्यादिविषया महतो-गरीयस. अर्थस्य-साध्यस्य सिद्धिरुक्तरूपा आत्यन्तिकी-अत्यन्तभवा 'न च', भूत्वापि पुनर्विनाशात् 'मुक्ति पुनर्द्वयोपेता' महदात्यन्तिकभावयुक्ता 'सत्प्रमोदास्पदं' सत. सर्वातिशायिनः प्रमोदस्य स्थानम् ततो-द्वयोपेतत्वाद्धेतोरिति ॥१७५॥

ननु सन्निहिताया मुक्तौ स्यादेतत्पर तत्सन्निधानमप्यसभाव्यमित्याशंक्याह—

आसन्ना चेयमस्योच्चैश्चरमावर्तिनो यत ।
भूयासोऽमी व्यतिक्रान्तास्तदेकोऽत्र न किंचन ॥१७६॥

आसन्ना चाभ्यर्णवर्तिन्येव इय-मुक्ति अस्योच्चैरतीव चरमावर्तिन-चरमपुद्गलपरावर्तभाजो जीवस्य, यत-कारणात् भूयासोऽतीवबहव अमी आवर्ता. व्यतिक्रान्ता-अनादौ संसारे व्यतीता । तत्-तत. एकोऽपश्चिम. अत्र-जगति 'न किंचन'-न किंचिद्भयस्थानमेष इत्यर्थ. ॥१७६॥

अत एव च योगज्ञैरपुनर्बन्धकादयः ।
भावसारा विनिर्दिष्टास्तथापेक्षादिवर्जिता ॥१७७॥

'अत एव च'-मुक्त्यासन्नभावादेव च योगज्ञै.-शास्त्रकारै. अपुनर्बन्धकादयो-ऽपुनर्बन्धकसम्यग्दृष्टिचारित्रिणो धर्माधिकारिण भावसारास्तत्त्वपरिणतिप्रधाना विनिर्दिष्टा-प्रज्ञप्ता.,-तथा इति विशेषणसमुच्चये । अपेक्षादिवर्जिता-उक्तरूपापेक्षानाभोगरहिता ॥१७७॥

अपुनर्बन्धकप्रभृतित्वाद्धर्माधिकारिणाम् तमेवादौ व्याचष्टे—

भवाभिनन्दिदोषाणां प्रतिपक्षगुणैर्युतः ।
वर्धमानगुणप्रायो ह्यपुनर्बन्धको मतः ॥१७८॥

भवाभिनन्दिदोषाणां-"क्षुद्रो लाभरतिर्दीनो मत्सरी"[श्लो.८७] इत्यादिना प्रागेवोक्तानाम् प्रतिपक्षगुणैरक्षुद्रतानिर्लोभतादिभिर्युतो 'वर्धमानगुणप्रायो'- वर्धमाना शुक्लपक्षक्षपापतिमण्डलमिव प्रतिकलमुल्लसन्तो गुणा औदार्यदाक्षिण्यादयः प्रायो बाहुल्येन यस्य स तथा, अपुनर्बन्धको-धर्माधिकारी मतोऽभिप्रेत ॥१७८॥

अस्यैषा मुख्यरूपा स्यात् पूर्वसेवा यथोदिता ।
कल्याणाशययोगेन शेषस्याप्युपचारतः ॥१७९॥

अस्या-ऽपुनर्बन्धकस्य, एषा-प्रागुक्ता, मुख्यरूपा--निरूपचरिता स्याद्-भवेत् पूर्वसेवा-देवादिपूजारूपा यथोदिता यत्प्रकारा निरूपिता प्राक् कल्याणाशययोगेन-मनाग् मुक्त्यनुकूलशुभभावसम्बन्धेन, शेषस्यापि-अपुनर्बन्धकापेक्षया विलक्षणस्य सकृद्बन्धकादेः उपचारत-औपचारिकी पूर्वसेवा स्यात्, अद्यापि तथाविधभववैराग्याभावात्तस्य ।

इह केचिन्मार्गपतितमार्गाभिमुखावपि शेषशब्देनाहुः । तच्च न युज्यते, अपुनर्बन्धकावस्थाविशेषरूपत्वात्तयोरपुनर्बन्धकग्रहणेनैव गतत्वात्, यतो ललितविस्तराया मार्गलक्षणमित्थमुक्तम्-'-इह मार्गश्चेतसोऽवक्रगमनं भुजंगमनलिकायानतुल्यो विशिष्टगुणस्थानावाप्तिप्रगुणः स्वरसवाही क्षयोपशमविशेष इति । तत्र प्रविष्टो मार्गपतितः, मार्गप्रवेशयोग्यभावापन्नो मार्गाभिमुखः ।' एवं च नैतावपुनर्बन्धकावस्थायाः परपरतरावस्थाभाजौ वक्तुमुचितौ, भगवदाज्ञावगमयोग्यतया पञ्चसूत्रकवृत्तावनयोरुक्तत्वात् । यथोक्तं तत्र-"इयं च भागवती सदाज्ञा सर्वैवापुनर्बन्धकादिगम्या । अपुनर्बन्धकादयो ये सत्त्वा उत्कृष्टां कर्मस्थितिं तथाऽपुनर्बन्धकत्वेन क्षपयन्ति, ते खल्वपुनर्बन्धकाः । आदिशब्दान्मार्गपतितमार्गाभिमुखादयः परिगृह्यन्ते, दृढप्रतिज्ञालोचनादिगम्यलिंगाः । एतद्गम्येयं न संसाराभिनन्दिगम्येति । संसाराभिन-

न्दिनश्चापुनर्बन्धकप्रागवस्थाभाजो जीवा इति" ॥१७९॥

ननूपचरितं वस्त्वेव न भवति, तत्कथमुपचारत. शेषस्य पूर्वसेवा स्यादित्याशङ्क्याह—

कृतश्चास्या उपन्यास शेषापेक्षोऽपि कार्यत ।
नासन्नोऽप्यस्य बाहुल्यादन्यथैतत्प्रदर्शकः ॥१८०॥

कृतश्च-कृत पुनरिह अस्या पूर्वसेवाया. उपन्यास.-प्रज्ञापनारूप शेषापेक्षोऽपि-अपुनर्बन्धकभावासन्नजीवानाश्रित्य कार्यतो-भाविनीं भावरूपां पूर्वसेवामपेक्ष्य 'नड्वलोदक पादरोग' इत्यादिदृष्टान्तात् यतः न-नैव आसन्नोऽपि-समीपवर्त्यपि जीव, अस्याऽपुनर्बन्धकभावस्य किं पुनरयमेवेत्यपि शब्दार्थ बाहुल्यात्प्रायेण अन्यथा-पुनर्बन्धाचारविलक्षणो वर्तत इति एतस्यार्थस्य प्रदर्शको—व्यापक । न हि मृत्पिण्डादि कारणं कार्याद्घटादेर्बाहुल्येन वैलक्षण्यमनुभवद दृश्यते किं तु कथंचित्तुल्यरूपतामिति ॥१८०॥

इदमेवाधिकृत्याह—

शुध्यल्लोके यथा रत्नं जात्यं काञ्चनमेव वा ।
गुणै. सयुज्यते चित्रैस्तद्वदात्मापि दृश्यताम् ॥१८१॥

शुध्यच्छुद्धिमनुभवत्क्षारमृत्पुटपाकादिसयोगेन । लोके-व्यवहारार्हजनमध्ये यथा रत्न-पद्मरागादि जात्य—अकृत्रिमम् 'काञ्चनमेव वा'-चामीकर वा, गुणैः कान्त्यादिभिः संयुज्यते-सश्लिष्यति चित्रैर्नानाविधैस्तदुचितै', तद्वद्रत्नकाञ्चनवत् आत्मापि-जीव. शुध्यत्, किं पुना रत्नकाञ्चन इत्यपिशब्दार्थः, दृश्यता ऊहापोहचक्षुषावलोक्यतामिति ॥१८१॥ अत्रैव मतान्तरमाह—

तत्प्रकृत्यैव शेषस्य केचिदेना प्रचक्षते ।
आलोचनाद्यभावेन तथानाभोगसङ्गताम् ॥१८२॥

सा वक्ष्यमाणविशेषणानुरूपा या प्रकृति. स्वभावस्तया 'शेषस्य'-सकृद्बन्धकादे. केचिच्छास्त्रकारा एना-पूर्वसेवाम् प्रचक्षते-व्याकुर्वते, न पुन. सर्वे, कीदृशीमित्याह 'आलोचनाद्यभावेन'-आलोचनस्योहस्यादिशब्दादपोहस्य च निर्णयस्य मार्गविषयस्याभावेन, 'तथानाभोगसङ्गता' तथा तत्प्रकार कथंचि-

दपि भवस्वरूपाऽनिर्णायको योऽनाभोग उपयोगाभावस्तत्सङ्गतां, पूर्वं कारण-भावेनोपचरितत्वमुक्तमत्र चानाभोगद्वारेणेति ॥१८२॥

एतदेव समर्थयमान आह—

युज्यते चैतदप्येवं तीव्रे मलविषे न यत् ।
तदावेगो भवासङ्गस्तस्योच्चैर्विनिवर्तते ॥१८३॥

'युज्यते च'-घटत एव एतदप्यनन्तरोक्तं वस्तु, किं पुनः परपरोक्तमित्यपिशब्दार्थः 'एवं'-यथा केचित्प्रचक्षते । अत्र हेतुः-तीव्रेऽत्यन्तमुत्कटे, मलविषे-कर्मबन्धयोग्यतालक्षणे न-नैव यद्-यस्मात् तदावेगो-मलविषावेगः किंरूप इत्याह भवासङ्ग'-संसारप्रतिबन्धः तस्य-शेषजीवस्य उच्चै'-अत्यन्तम विनिवर्तते । मनागपि हि तन्निवृत्तौ तस्याऽपुनर्बन्धकत्वमेव स्यादित्यौपचारिक्येव शेषस्य पूर्वसेवेति स्थितम् ॥१८३॥

अथ यां प्रकृतिमाश्रित्य पूर्वसेवा स्यात्तां तद्विपर्ययं चाह—

सङ्क्लेशाऽयोगतो भूयः कल्याणाङ्गतया च यत् ।
तात्त्विकी प्रकृतिर्ज्ञेया तदन्या तूपचारतः ॥१८४॥

'संक्लेशाऽयोगतो भूय.'-पुनरपि तीव्रसंक्लेशाऽयोगेन कल्याणांगतया चोत्तरोत्तरभववैराग्यादिकल्याणनिमित्तभावेन च यद्यस्माद्वर्तते या सा तस्मात्तात्त्विकी—वास्तवरूपा, प्रकृति—स्वभावलक्षणा धर्मार्हजीवस्य ज्ञेया । तदन्या तु-तस्या अन्या पुनः प्रकृतिः 'उपचारत'-उपचरितरूपा, तात्त्विकप्रकृतिविलक्षणत्वात्तस्या. ॥१८४॥

एना चाश्रित्य शास्त्रेषु व्यवहारः प्रवर्तते ।
ततश्चाधिकृतं वस्तु नान्यथेति स्थित ह्यद ॥१८५॥

एनां चैनामेव तात्त्विकीं प्रकृतिम् आश्रित्यापेक्ष्य 'शास्त्रेषु'—योगप्रतिबद्धेषु 'व्यवहार.'—पूर्वसेवादिः 'प्रवर्तते'—प्रज्ञापनीयतामेति 'ततश्च'—तस्मादेव हेतोः 'अधिकृतं' पूर्वसेवालक्षणं 'वस्तु'—तात्त्विकम् नान्यथा—ऽपुनर्बन्धक व्यतिरिच्य इति 'स्थितं'—प्रतिष्ठितम् हि—स्फुटम् 'अद.'—एतत् ॥१८५॥

शान्तोदात्तत्वमत्रैव शुद्धानुष्ठानसाधनम् ।
सूक्ष्मभावोहसंयुक्तं तत्त्वसंवेदनानुगम् ॥१८६॥

शान्तस्तथाविधेन्द्रियकषायविकारविकल, 'उदात्त' उच्चोच्चतराद्याचरणस्थितिबद्धचित्त., तत. शान्तश्चासावुदात्तश्च शान्तोदात्तस्तस्य भावस्तत्त्वम् 'अत्रैव'–प्रोक्तप्रकृतौ सत्या जायते 'शुद्धानुष्ठानसाधनं'–निरवद्याचरणकारणम् । तथा 'सूक्ष्मभावोहसंयुक्तं'–बन्धमोक्षादिनिपुणभावपर्यालोचनयुतम् । अत एव 'तत्त्वसंवेदनानुग'–तत्त्वसंवेदनसंज्ञितज्ञानविशेषमसन्वितम् ॥१८६॥

शान्तोदात्तः प्रकृत्येह, शुभभावाश्रयो मतः ।
धन्यो भोगसुखस्येव, वित्ताढ्यो रूपवान् युवा ॥१८७॥

ततः 'शान्तोदात्त' उक्तरूप 'प्रकृत्या' स्वभावेन इह–जने 'शुभभावाश्रय.'–परिशुद्धचित्तपरिणामस्थानम् 'मतो' जन्तुः । अत्र दृष्टान्तमाह धन्य - सौभाग्यादेयतादिना धनार्ह 'भोगसुखस्येव'–शब्दरूपरसगन्धस्पर्शसेवालक्षणस्य यथाऽऽश्रय. वित्ताढ्यो–विभवनायक 'रूपवान्'—शुभशरीरसंस्थान 'युवा'-तरुणः पुमान् ॥१८७॥ एतदेव व्यतिरेकत आह—

अनीदृशस्य च यथा, न भोगसुखमुत्तमम् ।
अशान्तादेस्तथाशुद्धं, नाऽनुष्ठानं कदाचन ॥१८८॥

'अनीदृशस्य च'–धन्यादिविशेषणविकलस्य पुनः 'यथा न भोगसुखं' शब्दादिविषयानुभवलक्षणम् 'उत्तमं'-प्रकृष्टम् । अशान्तादेरशान्तस्यानुदात्तस्य च तथा-भोगसुखवत् शुद्धं-निर्वाणावन्ध्यबीजकल्पम् नाऽनुष्ठानं देवपूजनादि । 'कदाचन'-क्वचिदपि काले ॥१८८॥ तर्हि किं स्यादित्याशंक्याह—

मिथ्याविकल्परूपं तु, द्वयोर्द्वयमपि स्थितम् ।
स्वबुद्धिकल्पनाशिल्पिनिर्मितं न तु तत्त्वतः ॥१८९॥

'मिथ्याविकल्परूप तु'-मरुमरीचिकादिषु मुग्धमृगादीना जलादिप्रतिभासाकार पुन, द्वयोरुक्तविलक्षणयोर्भोगिधार्मिकयो. द्वयमपि-भोगसुखानुरूपं किं पुनरेकैकमित्यपिशब्दार्थे. 'स्थितं'-प्रतिष्ठितम् । किमुक्त भवति 'स्वबुद्धिकल्पनाशिल्पिनिर्मितम्'-स्वबुद्धिकल्पना–स्वच्छन्दमतिविकल्परूपा सैव

'शिल्पी'-वैज्ञानिकस्तेन निर्मितं-घटितम् । न तु-न पुनः तत्त्वतः-परमार्थतः तद्भोगसुखं धर्मानुष्ठानं चेति ॥१८९॥ तद्भावनार्थमाह—

भोगाङ्गशक्तिवैकल्यात्, दरिद्राऽयौवनस्थयोः ।
सुरूपरागाशङ्के च, कुरूपस्य स्वयोषिति ॥१९०॥

इह भोगाङ्गानि रूपादीनि वात्स्यायनोक्तानि । यदाह वात्स्यायनः—'रूपवयोवैचक्षण्यसौभाग्यमाधुर्यैश्वर्याणि भोगसाधनम् इति, तत्रापि रूपवयोवित्ताढ्यत्वानि प्रधानानि इति" । एतदेव त्रितयमपेक्ष्याह भोगाङ्गशक्तिवैकल्यात् भोगाङ्गानां रूपादीनां शक्तेर्भोगासेवनलक्षणाया वैकल्यमभावः । दरिद्राऽयौवनस्थयोर्दरिद्रस्य भोगाङ्गविरहोऽयौवनस्थस्य त्वशक्तिरिति । 'सुरूपरागाशङ्के च'—सुरूपे भोक्तुमारब्धे स्त्रीगते सुन्दरे सस्थाने रागोऽभिष्वङ्गातिरेकः, आशङ्का च स्त्रीगतानुरागसन्देहरूपा तस्मिन्, ततः सुरूपरागश्चाशङ्का च सुरूपरागाशङ्के पुनः 'कुरूपस्य' तु पुंसः 'स्वयोषिति' स्वस्त्रियामिति ॥१९०॥ ततश्च—

अभिमानसुखाऽभावे, तथा क्लिष्टान्तरात्मनः ।
अपायशक्तियोगाच्च, न हीत्थं भोगिनः सुखम् ॥१९१॥

अभिमानसुखाभावे-'अहं सुखी' त्येवंचित्तप्रतिपत्तिरूपलक्षणस्याभिमानसुखस्याभावे सति 'तथा' इति विशेषणसमुच्चये, क्लिष्टान्तरात्मनो—ऽपूर्यमाणेच्छत्वेन साबाधचित्तस्य अपायशक्तियोगाच्च-अपायस्य निर्वाहशरीरव्यवच्छेदरूपस्य दरिद्राऽयौवनस्थयोः कुरूपस्य वा रुचिमत्स्त्रीकृतोच्चाटनादेर्या शक्तिर्योग्यता तस्या योगात्सम्बन्धात्, च. समुच्चये, किमित्याह न हि—नैव, इत्थं—अनाढ्यत्वादिविशिष्टस्य, 'भोगिनः सुख' भोगजं यद्विचक्षणैर्मृग्यत इति ॥१९१॥ यथा च तद्भोगसुखमनुष्ठानं च दृष्टान्तदार्ष्टान्तिकभावेन स्यातां तथाह—

अतोऽन्यस्य तु धन्यादेरिदमत्यन्तमुत्तमम् ।
यथा तथैव शान्तादे', शुद्धानुष्ठानमित्यपि ॥१९२॥

अतः-प्रागुक्ताद्भोगिनः सकाशात् 'अन्यस्य तु'—अन्यप्रकारभाजः

पुनः भव्यादेरुक्तरूपस्य भोगिनः । इदं–भोगसुखम् अत्यन्तमुत्तमं शेषभोगसुखातिशायि यथा स्यात् तथैव 'शान्तादेः'–शान्तोदात्तप्रकृतेः 'अनुष्ठानं' प्रस्तुतम्, 'इत्यपी'दमपि ज्ञेयमिति ॥१९२॥

एवं सति यत्स्यात्तदाह—

क्रोधाद्यबाधितः शान्त' उदात्तस्तु महाशयः ।
शुभानुबन्धिपुण्याच्च, विशिष्टमतिसङ्गतः ॥१९३॥

क्रोधाद्यबाधित शान्त', उदात्तस्तूदात्त पुनः महाशयो–गाम्भीर्यादिगुणोपेतत्वेन महाचेता. 'शुभानुबन्धिपुण्याच्च'-पुण्यानुबन्धिन. पुण्यात्सकाशात्पुन. 'विशिष्टमतिसङ्गतो'–मार्गानुसारिप्रौढप्रज्ञानुगत. सन् ॥१९३॥

किमित्याह—

ऊहतेऽयमत प्रायो, भवबीजादिगोचरम् ।
कान्तादिगतगेयादि, तथा भोगीव सुन्दरम् ॥१९४॥

'ऊहते'–वितर्कयति अय अपुनर्बन्धक अतो विशिष्टमतिसाङ्गत्याव 'प्रायो'–बाहुल्येन । कथमित्याह 'भवबीजादिगोचर'–भवबीजं–भवकारणम् आदिशब्दात् भवस्वरूपं भवफलं च गृह्यते । यथा–"एस णं अणाइ जीवे अणाइ जीवस्स भवे अणाइकम्मसयोगनिव्वत्तिए दुक्खरूवे दुक्खफले दुक्खाणुबन्धित्ति" [पंचसूत्र १] । ततो भवबीजादिगोचरो यत्र तत्तथा, क्रियाविशेषणमेतत्, अथवा भवबीजादिगोचरो = विषय ऊहनीयतया भवबीजादिगोचरस्तम् । अत्र दृष्टान्तः कान्तादिगतगेयादि कान्ता-वल्लभा आदिशब्दात्तदन्यगायनादिग्रह., तद्गतं–तत्प्रतिबद्धं यद्गेय गीतम्, आदिशब्दाद्रूपरसादिशेषेन्द्रियविषयग्रह. । तथा-तत्प्रकारो गेयाद्यूहयोग्य. भोगी, स इव सुन्दर मनोहारीन्द्रियविषयस्थानमागतमिति, यथा विचक्षणो भोगी सुन्दर कान्तादिगतगेयाद्यूहते, तथाऽयं भवबीजादिकमिति भाव ॥१९४॥

यथोहते तथैवाह—

प्रकृतेर्भेदयोगेन, नासमो नाम आत्मन' ।
हेत्वभेदादिदं चारु, न्यायमुद्रानुसारतः ॥१९५॥

प्रकृतेः-परपरिकल्पितायाः सत्त्वरजस्तमोरूपायाः, स्वप्रक्रियया ज्ञानावरणादिलक्षणायाः भेदयोगेनैकान्तेनैव भेदेनेत्यर्थः न—नैव असमो—विसदृशो, नाम—परिणामश्चैतन्यश्रद्धानोन्मीलनादिकः प्रत्यक्षत एवोपलभ्यमानः, आत्मनो—जीवस्य स्यात्, किं तु सर्वजीवानां सर्वदैव सम एव प्राप्नोति, कुत इत्याह हेत्वभेदात्—हेतोः प्रकृतिलक्षणस्याऽभेदात् अनानात्वात्, न ह्यभिन्ने हेतौ क्वचिदपि फलभेद उपपद्यत इति कृत्वा इदमेकान्तेनैव प्रकृतिभेदेषु आत्मनः परिणामवैसदृश्यमाङ्गल्यलक्षणं वस्तु चारु—सङ्गतं वर्तते। कुत इत्याह 'न्यायमुद्रानुसारतः'-न्यायस्य न्याय एव वा मुद्रा कृतप्रयत्नैरपि परैरनुल्लङ्घनीयत्वाद्राजादिमुद्रावत्तस्या अनुसारतोऽनुवर्तनात्। तथाहि—यदि प्रकृतिभेदे सत्यपि परिणामनानात्वमात्मन इष्यते, तदा मुक्तानामपि प्राप्नोति, संसारिणां मुक्तानामपि च प्रकृतिभेदाऽविशेषात् ॥१९५॥

> एवं च सर्वस्तद्योगादयमात्मा तथा तथा।
> भवे भवेदतः सर्वप्राप्तिरस्याऽविरोधिनी ॥१९६॥

एवं च—प्रकृतिभेदे आत्मनः परिणामनानात्वसांगत्ये सति, पुनः किं स्यादित्याह 'सर्व'—निरवशेषः, 'तद्योगात्'-प्रकृतिसंयोगात्कथंचिदेकत्वापत्तिलक्षणात्, 'अयं'-अपुनर्बन्धकाद्यवस्थाभाक् 'आत्मा'—जीवः 'तथा तथा'—नरनारकादिपर्यायभाक्त्वेन, भवे—संसारे 'भवेत्'—स्यात 'अतः'—तथा तथा भवनात् 'सर्वप्राप्तिः'-संसारापवर्गावस्थालाभरूपा 'अस्य'-आत्मनः 'अविरोधिनी'-अविघटमाना सम्पद्यते। प्रकृतियोगात्तस्य संसारावस्था वियोगात्तु मुक्तावस्थेति भावः ॥१९६॥

> सांसिद्धिकमलाद् यद्वा, न हेतोरस्ति सिद्धता।
> तद्भिन्नं यदभेदेऽपि, तत्कालादिविभेदतः ॥१९७॥

सांसिद्धिकमलात्-कर्मबन्धयोग्यतालक्षणादनादिस्वभावात्, सांसिद्धिकमलं परिहृत्येत्यर्थः, 'यद्वा' इत्यूहस्यैव पक्षान्तरसूचकः न-नैव हेतोरन्यस्येश्वरानुग्रहादेः, परिणामचित्रतायां साध्यायां 'सिद्धता'—प्रमाणप्रतिष्ठितता।

ईश्वरो ह्यप्रतिस्खलितवैराग्यवान्, यतः पठयते—"ज्ञानमप्रतिघं यस्य, वैराग्यं च जगत्पतेः। ऐश्वर्यं चैव धर्मश्च, सहसिद्धं चतुष्टयम् ॥१॥" ततः कथमसौ कचनानुगृह्णीयान्निगृह्णीयाद्वा ? किं चासौ योग्यतामपेक्ष्य प्रवर्तेत इतरथा वेति द्वयी गतिः, किं चातः, यदि प्रथमः पक्षः, तदा सैव योग्यता हेतुः, किमीश्वरानुग्रहनिग्रहाभ्याम् ? अथेतरथा, तदा सार्वत्रिकावेवानुग्रहनिग्रहौ स्यातां न वा क्वचित्, निमित्ताभावात्। यतः पठयते—"नित्यं सत्त्वमसत्त्वं वा हेतोरन्यानपेक्षणात्। अपेक्षातो हि भावानां, कादाचित्कत्वसम्भवः ॥१॥ इति सांसिद्धिकमलमेवात्मना परिणामवैचित्र्यहेतुः।

अत्र हेतुः तत्-सांसिद्धिकमलम् 'भिन्न'—नानारूपम् यद्यस्मात्कारणात् 'अभेदेऽपि'—कथंचित्सामान्यरूपतया, एतदपि कुत इत्याह 'तत्कालादिविभेदतः'—ते शास्त्रान्तरप्रसिद्धा ये कालादयः कालस्वभावनियतिपूर्वकृतपुरुषकारलक्षणा हेतवः सर्वजगत्कार्यजनकाः, तेषां विभेदतो वैसदृश्यात्। इदमुक्तं भवति—'कालादिभेदात्तत्सांसिद्धिकं मलमात्मना सह भेदाभेदवृत्ति सद्यतो नानारूपं वर्तते, ततस्तद्वशादेव परिणामवैचित्र्यमात्मनामनुपचरितमेवोपपद्यते न पुनरीश्वरानुभावात्, प्रागुक्तयुक्त्या तस्य निराकृतत्वात्' इति वा चिन्तयत्यसाविति ॥१९७॥ इदमेव समर्थयति—

विरोधिन्यपि चैवं स्यात्, तथा लोकेऽपि दृश्यते।
स्वरूपेतरहेतुभ्यां, भेदादेः फलचित्रता ॥१९८॥

'विरोधिन्यपि च' विघटमानैव च 'सर्वार्थप्राप्तिः' इत्यनुवर्तते, न पुनः कथंचिदपि अविरोधिनी 'एव'—सांसिद्धिकमलादन्यहेत्वभ्युपगमे सति, 'स्याद्'—भवेत्। यथा च विरोधिनी सर्वप्राप्तिः, तथाऽनन्तरमेव दर्शितेति। 'तथा' इति हेत्वन्तरसमुच्चये। 'लोकेऽपि'-शास्त्रे तावद्दर्शितैवेत्यपिशब्दार्थः 'दृश्यते'—विलोक्यते 'स्वरूपेतरहेतुभ्यां'—स्वरूपहेतुः परिणामिकारणम् यथा मृद् घटस्य, इतरः पुनर्निमित्तहेतुर्यथा तस्यैव चक्रचीवरादि, ताभ्यां—तावाश्रित्येत्यर्थः। भेदादेः-भेदादभेदाच्च यथायोगं सम्बन्धात्स्वरूपहेतुमपेक्ष्याभेदादितरापेक्षया च भेदात्, किमित्याह 'फलचित्रता—' कार्याणां नानारूपता।

यदि हि मृन्मात्रहेतुक एव घटः स्यात्तदा सर्वघटाना मृन्मयत्वाऽविशेषादेकाकारतैव स्यात् , तथा बाह्यमात्रनिमित्तत्वे परिणामिकारणविरहेण कूर्मरोमादेरिव न कस्यचित्कार्यस्योत्पत्ति· स्यादिति स्वरूपेतरहेतू समाश्रित्याऽभेदवृत्त्या च कार्यमुत्पद्यमानं चित्ररूपतां प्रतिपद्यते । एव सासिद्धिके मले सर्वजीवाना परिणामिकारणे सति तत्कालादिबाह्यकारणसव्यपेक्षतया चित्रकर्मबन्धकाना नानापरिणामप्राप्त्या सर्वो लोक. शास्त्रप्रसिद्धो नरनारकादिपर्याय·, तद्ह्रासात्पुनरपुनर्बन्धकत्वादियावत् सर्वक्लेशप्रहाणिलक्षणा मुक्तिरिति सर्वमनुपचरितमुपपद्यत इत्यूहत इति ॥१९८॥ तत. किमित्याह—

एवमूहप्रधानस्य, प्रायो मार्गानुसारिणः ।
एतद्वियोगविषयोऽप्येष सम्यक् प्रवर्तते ॥१९९॥

एवमुक्तरूपेण ऊहप्रधानस्य-वितर्कसारस्य प्रायो-बाहुल्येन 'मार्गानुसारिणो निर्वाणपथानुकूलस्य, अपुनर्बन्धकत्वेन क्वचिदन्यथापि प्रवृत्तिरस्य स्यादिति प्रायोग्रहणम्, एतद्वियोगविषयोऽप्यात्मना सह प्रकृतिविघटनगोचरः किं पुनर्भवबीजादिगोचर इत्यपिशब्दार्थ. 'एष' ऊहः सम्यगूहनीयार्थाऽव्यभिचारी प्रवर्तते—समुन्मीलति । इदमुक्तं भवति—यथा भवबीजादिगोचरमतिनिपुणमूहते, तथा क्रमेणात्मनः कर्मणा वियोगो घटत एवमप्यूहत इति ॥१९९॥ एवं सति यत्सिद्धं तदाह—

एवंलक्षणयुक्तस्य प्रारम्भादेव चापरैः ।
योग उक्तोऽस्य विद्वद्भिर्गोपेन्द्रेण यथोदितम् ॥२००॥

'एवंलक्षणयुक्तस्य'—पूर्वोक्तोहगुणसमन्वितस्य 'प्रारम्भादेव'—प्रारम्भमेव पूर्वसेवालक्षणमाश्रित्य अपरैस्तीर्थान्तरीयैः 'योगो' वक्ष्यमाणनिरुक्त., उक्तोऽस्या—ऽपुनर्बन्धकस्य विद्वद्भिः-विचक्षणैः गोपेन्द्रेण—योगशास्त्रकृता 'यथोदित'—यत्प्रकारमिद वस्तु तथोदितमिति ॥२००॥ तदेव दर्शयति—

योजनाद्योग इत्युक्तो, मोक्षेण मुनिसत्तमै· ।
स निवृत्ताधिकारायां, प्रकृतौ लेशतो ध्रुव· ॥२०१॥

योजनाद्—घटनात् 'मोक्षेण' इत्युत्तरेण सम्बन्धः, योग इति अस्माद्धेतो·,

उक्तो मुनिसत्तमैः–ऋषिपुङ्गवैः । स योगः 'निवृत्ताधिकारायां'–व्यावृत्त-पुरुषाभिभवायां प्रकृतौ 'लेशतः'–किंचिदवृत्त्या 'ध्रुवो'–निश्चितः ॥२०१॥
कीदृश इत्याह—

वेलावलनवन्नद्यास्तदापूरोपसंहृते ।
प्रतिस्रोतोनुगत्वेन, प्रत्यहं वृद्धिसंयुतः ॥२०२॥

'वेलावलनवद्' वेला-जलवृद्धिस्तस्या वलन-व्यावृत्तिस्तद्वत नद्या–गंगादिकाया, कुतो यद्वलनमित्याह तदापूरोपसंहृते-महासमुद्रक्षोभेण यस्तस्या नद्या आपूरः-आपूरणं तस्योपसंहृते-उपसंहारात् निवृत्तप्रकृत्यधिकारस्य पुंसः, प्रतिस्रोतोनुगत्वेन हेतुना, "इन्द्रियकषायानुकूला वृत्तिरनुस्रोत-स्तत्प्रतिकूला तु प्रतिस्रोतः", तत प्रतिस्रोतोऽनुगच्छति य स प्रतिस्रोतो-नुग, तद्भावस्तत्त्वं तेन । किमित्याह प्रत्यहं प्रतिदिवसं 'वृद्धिसंयुतः' वृद्धिमनुभवन् । यथा नद्या आपूरोपसंहाराद्वेलावलनं प्रत्यहं प्रवर्तते, तथा प्रतिस्रोतोनुगामित्वान्निवृत्तप्रकृत्यधिकारस्य योग इति भावः ॥२०२॥
अन्यत एवायं योग इत्यर्थाद्दर्शयन्नाह—

भिन्नग्रन्थेस्तु यत्प्रायो, मोक्षे चित्तं भवे तनु ।
तस्य तत्सर्व एवेह, योगो योगो हि भावतः ॥२०३॥

भिन्नग्रन्थेस्तु–विदारितातितीव्ररागद्वेषपरिणामस्य पुंसः पुनः यद्–यस्मात् प्रायो बहून्वारान् मोक्षे–निवृत्तौ चित्त-अन्तःकरणम् । तथा भवे–भवकृत्येष्वित्यर्थः तनुः–शरीरं वर्तते तस्य–भिन्नग्रन्थेः । तत्तस्मात् 'सर्व एवेह' योगविचारे, धर्मार्थादिगोचरो योगो-व्यापारः । किमित्याह 'योगो हि' योग एव सम्यग्दर्शनादिरूपः, 'भावतः'-निश्चयवृत्त्या, "चित्तानुरूपफ-लत्वात्सर्वव्यापाराणामिति मोक्षाकांक्षाऽक्षणिकचित्तस्य सम्यग्दृष्टेर्या या चेष्टा सा सा मोक्षप्राप्तिपर्यवसानफला" इत्युपपद्यत एवास्य भावतो योग इति ॥२०३॥ एतदेव दृष्टान्ततो भावयन्नाह—

नार्या यथान्यसक्तायास्तत्र भावे सदा स्थिते ।
तद्योगः पापबन्धश्च, तथा मोक्षेऽस्य दृश्यताम् ॥२०४॥

नार्यास्तथाविधाया. स्त्रियः 'यथा' इति दृष्टान्तार्थः 'अन्यसक्ताया'—अन्यस्मिन्स्वभर्तु' पुरुषान्तरे रिरंसातिरेकात्प्रतिबद्धचित्तायाः सम्बन्धिनि तत्रा—ऽन्यस्मिन् , भावे-मनःपरिणामे सदा-सर्वकालम् 'स्थिते' आरूढे सति किमित्याह—'तद्योगः' तस्मिन्-अनुरागविषये पुरुषे 'योगो' व्यापार., स्वभर्तृ-शुश्रूषणादिकोऽपि तथा 'पापबन्धो' जायते, भावतः परपुरुषपरिभोगजन्यः। च पूर्ववत् 'तथा' इति दार्ष्टान्तिकार्थः, 'मोक्षे'—मोक्षविषये, अस्य-भिन्नग्रन्थे', कुटुम्बचिन्तनादिकोऽपि व्यापारो योगो निर्जराफलश्च 'दृश्यता' विमृश्यतामिति ॥२०४॥ इदमेव भावयन्नाह—

न चेह ग्रन्थिभेदेन, पश्यतो भावमुत्तमम् ।
इतरेणाकुलस्यापि, तत्र चित्तं न जायते ॥२०५॥

न चेह—नैवेह ग्रन्थिभेदेनोक्तरूपग्रन्थिविघटनेन पश्यतो—निरीक्षमाणस्य, भाव—पदार्थम् उत्तम—मोक्षरूपम् किमित्याह इतरेण—पुत्रकलत्र-प्रतिबन्धादिरूपेण भावेन, आकुलस्यापि—दुर्निवारतया कर्मपरिणतेराक्षिप्यमाणस्य, किं पुनरनाकुलस्येत्यपिशब्दार्थ' तत्रोत्तमभावे चित्तमन्तःकरणं, न जायते, किं तु जायत एवोत्तमभावदर्शनस्य, अन्यथा तत्त्वाऽयोगादिति ॥२०५॥ ननु किमनेन मोक्षचित्तेन येन भिन्नग्रन्थेर्भावतो योग उच्यते क्रियाया एव फलदानप्रत्यलत्वात्, यत. पठ्यते "क्रियैव फलदा पुंसां, न ज्ञान फलद मतम् । यत. स्त्रीभक्ष्यभोगज्ञो, न ज्ञानात्सुखितो भवेत् ॥१॥" इत्याशंक्याह-

चारु चैतद्यतो ह्यस्य, तथोहः सम्प्रवर्तते ।
एतद्वियोगविषय. शुद्धानुष्ठानभाक् स यत ॥२०६॥

चारु च-सुन्दरमेव एतद्—मोक्षचित्तमभिलाषरूपम् यतो-यस्मात् । हि—स्फुटम् अस्य-भिन्नग्रन्थे' तथा-तत्प्रकार , ऊहो-विमर्श. सम्प्रवर्तते-स्वयमेव जायते एतद्वियोगविषयो-भवपार्थक्यगोचर । तथा शुद्धानुष्ठानभाक्-परिशुद्ध-शुश्रूपाधर्मरागादिसमाचारभाक् स भिन्नग्रन्थिर्जीव यद्—यस्माद्वर्तत इति ॥२०६॥ अस्यैवाभ्युच्चयमाह—

प्रकृतेरा यतश्चैव, नाप्रवृत्त्यादिधर्मताम् ।
तथा विहाय घटत ऊहोऽस्य विमलं मन ॥२०७॥

प्रकृते.—कर्मसंज्ञिताया आ-अर्वाक् यतश्चैव-यत एव च हेतोः न-नैव अप्रवृत्त्यादिधर्मतां — अप्रवृत्तिर्निवृत्ताधिकारित्व, आदिशब्दात्तथाविधान्यप्रकृतिधर्मसंग्रहः ततोऽप्रवृत्त्यादयो धर्मा यस्या सा तथा, तद्भावस्तत्ता, ताम् । तथा—तेन प्रकारेण, विहाय-विरहय्य, घटते-युज्यते ऊह-उक्तरूप' अस्य-भिन्नग्रन्थे । किंलक्षणोऽसावित्याह 'विमलं'-अमलीमस मन -चित्तमिति । अयमभिप्राय प्रकृतेरप्रवृत्त्यादिधर्मता विहायार्वाक् न संसारिणो जीवस्योक्तलक्षण ऊहो घटते किं तु निवृत्त्यादिषु सतीष्विति ॥२०७॥ तत.—

सति चास्मिन्स्फुरद्रत्नकल्पे सत्त्वोल्बणत्वतः ।
भावस्तैमित्यतः शुद्धमनुष्ठानं सदैव हि ॥२०८॥

सति च—विद्यमाने पुनः अस्मिन्नूहे-विमलमनोरूपे स्फुरद्रत्नकल्पे—समुज्जृम्भमाणरुचिजालजटिलपद्मरागादिमणिविशेषसमाने, किमित्याह 'सत्त्वोल्बणत्वत —' सत्त्व वीर्यं तस्योल्बणत्वमुदग्रत्वं तस्मात् 'भावस्तैमित्यतो—' भावोऽन्त करण, तस्य स्तैमित्य-क्षुद्रतादिभिर्भवाभिनन्दिचित्तदोषैरक्षोभणीयता, तस्मात् शुद्ध अनवद्यम् अनुष्ठान—धर्मशास्त्रशुश्रूषणादि 'सदैव हि—' सर्वकालमेव स्यात् , परिशुद्धोहापोहयोगस्य सम्यगनुष्ठानावन्ध्यकारणत्वात । एव च सदूहभाज शुद्धानुष्ठानभाक्त्व प्रागाक्षिप्तं साधितं भवतीति ॥२०८॥

इदमेवानुष्ठानमधिकृत्याह—

एतच्च योगहेतुत्वाद्योग इत्युचितं वच' ।
मुख्याया पूर्वसेवायामवतारोऽस्य केवलम् ॥२०९॥

'एतच्चैत्पुन' शुद्धमनुष्ठानम् योगहेतुत्वाद्—मोक्षसंयोगकारणत्वाद्योगो वर्तते' इत्येवरूपम् उचित-योग्यं, वचो—वचनं सार्थकत्वादिन्द्रपुरन्दरादिशब्दवत् , न पुनरन्यदपुनर्बन्धकादिगतमिति भावः । अत्रैव विशेषमाह मुख्याया—प्रकृष्टाया, पूर्वसेवाया-देवगुरुपूजादिरूपायां अवतारः-अवकाश. अस्य-शुद्धानुष्ठानस्य केवल-परम् । अन्यदा तु जायमानमप्येतत्तदाभासमेव

स्यात् ॥२०९॥ अथ योगमेवाधिकृत्याह—

त्रिधा शुद्धमनुष्ठानं, सच्छास्त्रपरतन्त्रता ।
सम्यक्प्रत्ययवृत्तिश्च, तथात्रैव प्रचक्षते ॥२१०॥

"त्रिधा-त्रिभिः प्रकारैर्वक्ष्यमाणैः शुद्ध अनुष्ठानं, तथा 'सच्छास्त्रपरतन्त्रता'—सम्यक्श्रुतग्रन्थाधीनभावः, 'सम्यक्प्रत्ययवृत्तिः'—सम्यक्प्रत्यय आत्मगुरुलिङ्गशुद्धिभेदात त्रिधा तस्मिन्सति वृत्तिः-प्रवर्तनम् , चकार उक्तसमुच्चये 'तथा' इति वक्तव्यान्तरसमुच्चये, अत्रैव—योगप्रक्रमे योगो वर्तते" इति 'प्रचक्षते'—ब्रुवते धार्मिका इति ॥२१०॥ एतदेव भावयन्नाह—

विषयात्मानुबन्धैस्तु, त्रिधा शुद्धमुदाहृतम् ।
अनुष्ठानं प्रधानत्वं, ज्ञेयमस्य यथोत्तरम् ॥२११॥

'विषयात्मानुबन्धैस्तु' विषयेण—गोचरेण—आत्मना स्वरूपेण अनुबन्धेन चोत्तरत्रानुवृत्तिलक्षणेन पुन. त्रिधा शुद्धं-अनवद्यम् , उदाहृतं उक्तम् , अनुष्ठानं —तत्प्रवृत्तिलक्षणम् । अत्र प्रधानत्व—ज्येष्ठत्वं ज्ञेयं—अवगम्यम् , अस्य—त्रिधानुष्ठानस्य यथोत्तरम्—यद्यतोऽनुष्ठानमुत्तर तत्तदपेक्षया प्रधानमिति भावः ॥२११॥ अथेदमेव क्रमेण दर्शयति—

आद्यं यदेव मुक्त्यर्थं, क्रियते पतनाद्यपि ।
तदेव मुक्त्युपादेयलेशभावाच्छुभं मतम् ॥२१२॥

'आद्यं'—विषयशुद्धमनुष्ठानम् यदेव किंचित् मुक्त्यर्थं—मुक्तये 'मुक्तिर्मे भूयादितोऽनुष्ठानादि'ति प्रणिधानेन क्रियते—पतनाद्यपि तत्र पतनं हिमपथभृगुपातादिलक्षण आदिशब्दाच्छस्त्रपाटनगृध्रपृष्ठार्पणादि. शेषः स्वघातोपायः परिगृह्यते, किं पुन. शेषं त्वस्याहिंसकमित्यपिशब्दार्थः तदेव—तदप्यनुष्ठानम् 'मुक्त्युपादेयलेशभावाद्—भावप्रधानत्वान्निर्देशस्य मुक्त्युपादेयतासम्भवात् शुभ—शोभनम्—मत अभिप्रेतम् , न तु स्वरूपतः, अत्यन्तसावद्यरूपत्वात् ॥२१२॥

द्वितीयं तु यमाद्येव, लोकदृष्ट्या व्यवस्थितम् ।
न यथाशास्त्रमेवेह, सम्यग्ज्ञानाद्ययोगतः ॥२१३॥

'द्वितीय तु'-क्रमप्रामाण्यात्स्वरूपशुद्धानुष्ठानं पुनः 'यमाद्येव-पञ्चयमपञ्चनियमरूपमेव तत् कीदृशमित्याह 'लोकदृष्ट्या'-स्थूलव्यवहारिणो लोकस्य मतेन, व्यवस्थित-प्रसिद्धम्। अत एव न-नैव, यथाशास्त्रमेव, शास्त्रसद्भावः शासनाद् दु खत्राणाच्चोच्यते, तच्च जैनमेव। यथोक्तम् "शासनसामर्थ्येन तु, संत्राणबलेन चानवद्येन। युक्तं यत्तच्छास्त्रं, तच्चैतत्सर्वविद्वचनम्" ॥ [प्र. रति १८८] ॥ ततो यथा-येन प्रकारेण, शास्त्रं व्यवस्थित तेनैव, इह-योगचिन्तायाम्, कुत इत्याह 'सम्यग्ज्ञानाद्ययोगत'-सम्यग्ज्ञानश्रद्धानाऽभावात्, न हि सम्यग्ज्ञानाद्यभावे दूर संसारविरक्तोऽपि यथाशास्त्रमेव प्रवृत्तिमवलम्बितुं क्षम. किं तु घुणाक्षरवृत्त्यैव कदाचित्किंचिदेव। अयमत्र भाव.-येऽमी पूरणादय प्रथमगुणस्थानकवर्तिनोऽपि तथाविधसंसारवैराग्याल्लोकदृष्टिप्रतिष्ठितयमान्नियमांश्च जीवादितत्त्वमजानाना सन्त समनुतिष्ठन्ति तत्स्वरूपशुद्धमनुष्ठानमुच्यत इति ॥२१३॥

तृतीयमप्यद. किंतु, तत्त्वसवेदनानुगम्।
प्रशान्तवृत्त्या सर्वत्र, दृढमौत्सुक्यवर्जितम् ॥२१४॥

तृतीयमप्यनुष्ठानम् अदो-यमाद्येव, किन्तु-पुन' 'तत्त्वसंवेदनानुगं'-जीवादितत्त्वसम्यक्परिज्ञानानुगतम् तथा 'प्रशान्तवृत्त्या'-कषायादिविकारनिरोधरूपया सर्वत्र-कार्ये, दृढं-अत्यर्थम् 'औत्सुक्यवर्जितं'-त्वरापरिहीणं, अप्रशान्तवृत्तावेवौत्सुक्यदोषावकाशात् ॥२१४॥ अथैतदनुष्ठानत्रयस्य प्रत्येकं फलमाह—

आद्यान्न दोषविगमस्तमोबाहुल्ययोगत. ।
तद्योग्यजन्मसन्धानमत एके प्रचक्षते ॥२१५॥

आद्याद्विषयानुष्ठानात् न-नैव 'दोषविगमो'-मोक्षलाभबाधकदोषपरिहाणिरूपः, कुत इत्याह 'तमोबाहुल्ययोगतः'-तमसो-ऽज्ञानस्य बाहुल्यं-बहुलभावस्तद्योगात्, आत्मघातादिप्रवृत्तिव्यङ्ग्यो ह्यसौ, एतत्प्रधानं च प्रथमानुष्ठानम्। अत्रैव मतान्तरमाह 'तद्योग्यजन्मसन्धानं'-दोषविगमोचितस्य जातिकुलादिगुणयुक्तत्वेन जन्मनो भवान्तरोत्पत्तिलक्षणस्य सन्धानं घटनम्

अत.–अनुष्ठानात्, 'एके' शास्त्रकृत. 'प्रचक्षते'–प्रज्ञापयति ॥२१५॥
अत्र हेतु —

मुक्ताविच्छापि यच्छ्लाघ्या, तमःक्षयकरी मता ।
तस्याः समन्तभद्रत्वादनिदर्शनमित्यद ॥२१६॥

मुक्ताविच्छापि किं पुनरेतद्विषया क्रियेत्यपिशब्दार्थ. यद्–स्मात् श्लाघ्या –प्रशस्या 'तम.क्षयकरी'–मोहविध्वंसकारिणी 'मता' मतिमता, परं तस्या मुक्ते. 'समन्तभद्रत्वात्'-सर्वतः कल्याणरूपत्वात, अनिदर्शनं-अतीववैसदृश्या-दननुरूपम् इति-एवमतिसावद्यप्रकृतित्वेन अदो–विषयानुष्ठानं वर्तते । सदृशो हि भावः सदृशस्य हेतुर्भवति, यथा मृद् घटस्य, विषयानुष्ठानं त्वतीव-सावद्यरूपत्वात्कथमेकान्तनिरवद्यरूपाया मुक्तेर्हेतुः स्यात, अतो न तन्मु-क्तिहेतु किं तु तद्गतमुक्तीच्छामात्रमेव ॥२१६॥

द्वितीयाद्दोषविगमो, न त्वेकान्तानुबन्धनात् ।
गुरुलाघवचिन्तादि, न यत्तत्र नियोगत ॥२१७॥

द्वितीयाद्–अनुष्ठानात् दोषविगम –कषायादिनिरोधरूप. सम्पद्यते, न तु–न पुन' एकान्तानुबन्धनाद्भस्मीकृतदर्दुरचूर्णविनाशवदेकान्तेन सर्वथोत्तर-त्राप्यनुवृत्तिमान् । अत्र हेतु 'गुरुलाघवचिन्तादि' गुणदोषविषया गुरुलघुभा-वमीमांसा गुरुलाघवचिन्ता आदिशब्दात्प्रवृत्तिश्च न यद्–यस्मात तत्र स्वरू-पशुद्धानुष्ठाने नियोगतो–नियमेन । तथाहि–तथाविधविवेकवैकल्येन कायमा-त्रक्रियाप्रधानत्वान्नात्यन्तिको दोषविगमोऽत्र । यतः पठ्यते–"कायकिरियाए, दोसा, खविया मण्डुक्कचुण्णतुल्ल त्ति । सव्वायणए ते पुण, नेया तच्छारसा-रिच्छा" [ ] ॥२१७॥

अत एवेदमार्याणा, बाह्यमन्तर्मलीमसम् ।
कुराजपुरसच्छालयत्नकल्पं व्यवस्थितम् ॥२१८॥

अत एव दोषविगमैकान्तानुबन्धाभावादेव 'इदं'–स्वरूपशुद्धानुष्ठानम् 'आर्याणां'–सर्वहेयधर्मेभ्य आराद्यातयायिना मतेन बाह्यम्-अप्रधानम्, अत एवान्तर्मध्ये 'मलीमसं' मलिनम् 'कुराजपुरसच्छालयत्नकल्पं' कुराजस्य कुनृपतेर्यत्पुर नगर तस्य य. सन्सुन्दरः परैरधृष्यत्वाच्छाल. प्राकारस्तत्र यो

यत्न आदरातिरेकः कुराजस्यैव तत्कल्पं तत्तुल्य, 'व्यवस्थित'–प्रतिष्ठितम् । यथा हि विहितपराभ्रंज्यप्राकारमपि पुर कुत्सितराजाधिष्ठितं न च तथाविधां वृद्धिं लब्धुमलं लोकलुण्ठनादिभिस्तदुपद्रवैर्नित्यमेव तस्य दुःस्थीकृतत्वात्, एवं स्वरूपशुद्धानुष्ठानमिति बाह्यदोषाभावेऽपि तत्त्वज्ञानविकलस्य पुंसोऽत एव कुराजसदृशस्य न परां गुणवृद्धिं प्राप्तुमुत्सहते, अज्ञानदोषोपघातादेव ॥२१८॥

तृतीयाद्दोषविगम', सानुबन्धो नियोगतः ।
गृहाद्यभूमिकापाततुल्यः कैश्चिदुदाहृत ॥२१९॥

तृतीयात्सानुबन्धानुष्ठानात् दोषविगमः सानुबन्धो 'नियोगतो'–नियमेन वर्तते । अयं च 'गृहाद्यभूमिकापाततुल्यो'–गृहस्य देवगृहादेराद्यभूमिका दृढपीठबन्धरूपा तस्या आपात आरम्भस्तत्तुल्यस्तत्सदृशः कैश्चित्तीर्थान्तरीयैः उदाहृतः–उक्त', अयं चास्माकमपि समत एव । यथा हि गृहस्य सम्यगादिभूमिकाप्रारम्भो नोपरिविरच्यमानगृहभङ्गफल सम्पद्यते किं तु तदनुबन्धप्रधान एव, एवं तत्त्वसंवेदनानुगतमनुष्ठानमुत्तरोत्तरदोषविगमावहमेव भवति न तु कदाचनाप्यन्यथारूपमिति ॥२१९॥ एतदेव भावयति —

एतद्ध्युदग्रफलद, गुरुलाघवचिन्तया ।
अतः प्रवृत्तिः सर्वैव, सदैव हि महोदया ॥२२०॥

एतद्–अनुबन्धप्रधानमनुष्ठानम् हि–यस्मात् उदग्रफलद–उदारफलदायि कथमित्याह 'गुरुलाघवचिन्तया'–सर्वकार्येषु गुणदोषयोर्गुरुलघुभावालोचनेन एतदपि कथमित्याह 'अत'–गुरुलाघवचिन्तातः प्रवृत्ति–चेष्टा 'सर्वैव'–न पुनः काचिदेव, सदैव–सर्वकालमेव हि–यस्मात् महोदया अतिप्रशस्तफला स्यादिति ॥२२०॥ अथ सच्छास्त्रपारतन्त्र्यमधिकृत्याह—

परलोकविधौ शास्त्रात्, प्रायो नान्यदपेक्षते ।
आसन्नभव्यो मतिमान्, श्रद्धाधनसमन्वितः ॥२२१॥

'परलोकविधौ'–परलोकफले प्रयोजने कर्तव्ये शास्त्रादुक्तनिरुक्तात् प्रायो–बाहुल्येन न–नैव अन्यल्लोकरूढ्यादि अपेक्षते–आलम्बते । क इत्याह

'आसन्नभव्य.'—दूरभव्यव्यवच्छेदार्थमेतत् 'मतिमान्'—मार्गानुसारी प्रज्ञः तथा 'श्रद्धाधनसमन्वित.'—श्रद्धानुष्ठानाभिलाषरूपधनसमन्वितः ॥२२१॥

उपदेशं विनाप्यर्थकामौ प्रति पटुर्जन. ।
धर्मस्तु न विना शास्त्रादिति तत्रादरो हितः ॥२२२॥

उपदेशं—शास्त्रप्रज्ञापनम् विनाप्यन्तरेणापि किं पुनरितरथेत्यपिशब्दार्थ 'अर्थकामौ'—प्रतीतरूपावेव प्रतीत्याश्रित्य पटुर्जनो, लोकरूढिप्रामाण्यादपि तत्सिद्धिसम्भवात् । धर्मस्तु—धर्म. पुनरुक्तनिरुक्त 'न विना शास्त्रात्' इत्यस्माद्धेतो तत्र-शास्त्रे आदरो-यत्न -कल्याणरूप' सम्पद्यते इति ॥२२२॥

अर्थादावविधानेऽपि, तदभावः पर नृणाम् ।
धर्मेऽविधानतोऽनर्थ., क्रियोदाहरणात्पर ॥२२३॥

अर्थादावर्थकामलक्षणविषये अविधानेऽप्यविधावपि क्रियमाणे 'विधौ तावत्सर्वानर्थाभाव' इत्यपिशब्दार्थ. तदभावोऽर्थाद्यभाव 'पर' केवलं, नान्य. कश्चिदनर्थं नृणा-पुंसा सम्पद्यत इति । धर्मे-धर्मविषये अविधानतोऽविधानात् अनर्थोऽकल्याणम् क्रियोदाहरणाच्चिकित्सादृष्टान्तात् पर. प्रकृष्ट. ।

यथोक्तम्-"पडिवज्जिऊण किरियं, तीए विरुद्ध निसेवइ जो उ । अपवत्तगाउ अहियं, सिग्घ च संपावइ विणास" ॥२२४॥

तस्मात्सदैव धर्मार्थी, शास्त्रयत्नः प्रशस्यते ।
लोके मोहान्धकारेऽस्मिन् शास्त्रालोक प्रवर्तक ॥२२४॥

तस्माद्धर्मेऽविधानत. परानर्थभावात् सदैव-सर्वकालमेव धर्मार्थी-धर्माभिलापुक शास्त्रयत्न शास्त्रादरपर प्रशस्यते-श्लाघ्यते । कुत'?यत. लोके-जगति मोह एवान्धकारस्तमो यत्र स तथा तत्र, शास्त्रालोक -शास्त्रप्रकाश , प्रवर्तक. प्रवर्तयिता परलोकक्रियासु ॥२२४॥ अथ शास्त्रमेव स्तुवन्नाह—

पापामयौषध शास्त्रं, शास्त्रं पुण्यनिबन्धनम् ।
चक्षु' सर्वत्रगं शास्त्र शास्त्र सर्वार्थसाधनम् ॥२२५॥

पापामयौषधं—पापव्याधिशमनीय शास्त्रम् । तथा शास्त्र पुण्यनिबन्धन

–पवित्रकृत्यनिमित्तम् । चक्षुर्लोचनं सर्वत्रग–सूक्ष्मबादराद्यावर्थे गच्छति यत्तत्स-र्वत्रग शास्त्रम् , शास्त्रं सर्वार्थसाधन–सर्वप्रयोजननिष्पत्तिहेतुः ॥२२५॥ यतः

न यस्य भक्तिरेतस्मिंस्तस्य धर्मक्रियापि हि ।
अन्धप्रेक्षाक्रियातुल्या, कर्मदोषादसत्फला ॥२२६॥

न यस्य–धर्मार्थिन भक्ति –बहुमानरूपा एतस्मिन्–शास्त्रे, तस्य धर्मक्रि-यापि हि–देववन्दनादिरूपा किं पुनरन्यरूपेत्यपिहिशब्दार्थः अन्धप्रेक्षाक्रिया-तुल्या–अन्धस्यावलोकनकृते या प्रेक्षणकक्रिया तत्तुल्या कर्मदोषात् तथाविध-मोहोदयात असत्फला-अविद्यमानाभिप्रेतार्था सम्पद्यत इति ॥२२६॥

एतदपि कुत ? यतः—

य. श्राद्धो मन्यते मान्यानहङ्कारविवर्जित ।
गुणरागी महाभागस्तस्य धर्मक्रिया परा ॥२२७॥

य श्राद्ध'-सन्मार्गश्रद्धालु मन्यते-बहुमानविषयीकुरुते मान्यान्-देवता-दीन् 'अहङ्कारविवर्जितो'-मुक्ताभिमान । अत एव 'गुणरागी'-गुणानुरागवान् 'महाभाग.'-प्रशस्याचिन्त्यशक्ति किमित्याह तस्य-शास्त्रपरतन्त्रतया मान्यमन्तुः धर्मक्रिया-उक्तरूपा परा-प्रकृष्टेति ॥२२७॥ व्यतिरेकमाह "यस्य" इत्यादि–

यस्य त्वनादर. शास्त्रे, तस्य श्रद्धादयो गुणा. ।
उन्मत्तगुणतुल्यत्वान्न प्रशंसास्पदं सताम् ॥२२८॥

यस्य त्वनादरोऽगौरवरूप शास्त्रे, तस्य श्रद्धादय.-श्रद्धासंवेगनिर्वेदा-दयो गुणा. किमित्याह उन्मत्तगुगतुल्यत्वात्-तथाविधग्रहावेशात्सोन्मादपुरु-षशौर्यौदार्यादिगुणसदृशत्वात , न प्रशंसास्पद-न श्लाघास्थान सता-विवेकिना-मिति ॥२२८॥ एतदपि कथम् ? यत —

मलिनस्य यथात्यन्तं, जलं वस्त्रस्य शोधनम् ।
अन्त करणरत्नस्य, तथा शास्त्र विदुर्बुधा ॥२२९॥

मलिनस्य-मलवत', यथात्यन्तं-अतीव जलं-पानीयम् वस्त्रस्य-प्रतीतरूपस्य शोधनं-शुद्धिहेतु , 'अन्त.करण-रत्नस्य' अन्त.करण-मनः तदेव रत्नं तस्य चिन्तारत्नादिभ्योऽप्यतिशायिन 'तथा शास्त्र' विदुर्जानते शोधनं, बुधा -

